आगमोद्धारक-ग्रन्थमालाया सप्तत्रिंश रत्नम्।

ॐ नमो जिनाय।

आगमोद्धारक आचार्यप्रवरश्री आनन्दसागरसूरीश्वरेभ्यो नमः।

महोपाध्याय श्रीमद् धर्मसागरगणिविरचित

# सूत्रव्याख्यानविधिशतकम्।

प०पू० गच्छाधिपति आचार्य श्रीमन्माणिक्यसागर-
सूरीश्वरशिष्य मुनिलाभसागर।

प्रतय ५०० ] [ मूल्य २ ०० न०पै०

वीर संवत २४८८ वि० सं० २०१८

प्रकाशिका
मीठाभाई कल्याणचंद पेढी,
कपडवंज ( जि० खेड़ा )

द्रव्यसहायक—
कलकत्ता (गुजराती) श्वेताम्बर
मूर्तिपूजक तपागच्छ जैन संघ
६६, कैनिंग स्ट्रीट
कलकत्ता १

मुद्रक —
सुराना प्रिण्टिंग वर्क्स
४०२ अपर चितपुर रोड,
कलकत्ता ७

# किंचिद् वक्तव्य ।

आ स्वोपज्ञवृत्तिविभूषित 'सूत्रव्याख्याननिधिशतक' नामनो ग्रंथ जिनागमना अभ्यासी एवा बुधजनोना करकमलमां अर्पण करवामा आवे छे ।

आ ग्रंथना रचयिता बहुश्रुत महोपाध्याय श्रीमद् धर्मसागर-गणिवर छे । जो के ग्रंथकारे आखा ग्रन्थमा क्यांय पोताना नामनो निर्देश कर्यो नथी, परन्तु आ ग्रंथनी हस्तलिखित पुस्तक उपर 'महोपाध्याय श्रीधर्मसागरगणिवरकृत' आवो उल्लेख छे, ए विगेरे उपरथी आ ग्रंथना रचयिता पू० उपाध्यायनी सम्मति छे । पूज्यश्रीना प्रतिबोधकगुरु जीवनपर्यंत विगइना त्यागी पंडित शिरोमणी पू० श्री जीवर्षिगणि हता, प्रव्रज्याहेतु गुरु पू० आचार्य श्री आनन्दविमलसूरिजी अने नामपद् गुरु पू० आचार्यश्रीविजयदानसूरिनी हता ।

पूज्यश्री विद्याध्ययनमाटे पू० आचार्यश्री विजयहीरसूरिजी साथे देवगिरि पधार्या हता अने न्यायशास्त्रमा निष्णात थया हता । पूज्यश्रीने वि० सं० १६०८ वर्षे पू० आचार्य श्री विजयदानसूरिजीए उपाध्यायपदथी अलंकृत कर्या हता ।

पूज्यश्रीए कल्पकिरणावली प्रवचनपरीक्षा-तत्त्वतरंगिणी महावीरजिनस्तुति विगेरे अनेक ग्रंथोनी रचना करीने जिन-शासननी अजोड़ सेवा करी छे ।

पूज्यश्रीना उपाध्याय श्रीश्रुतसागरगणिविगेरे विद्वान् शिष्यो तेमज उपाध्याय श्रीशांतिसागरगणि विगेरे अनेक प्रशिष्यो हता।

संशोधनमां अमदावाद डेलाना उपाश्रयना हस्तलिखित-ज्ञानभंडारनी प्रति उपरथी शासनकंटकोद्धारक गणिवर्य श्री हंससागरजी महाराजजीना शिष्य ज्योतिर्विद् मुनिवर्य श्री नरेन्द्रसागरजी महाराजजीए स्वहस्ते लखेली अने सुरत श्री जैनानन्दपुस्तकालयनी प्रति उपरथी संशोधित बुक अमोने प्राप्त थइ हती।

तेना आधारे आ ग्रंथनु सावधानीथी संशोधन करवामां आव्यु छे छता कोइ भूल रहेली जणाय तो सुजनोए सुधारी वांचवु ए अभ्यर्थना।

लि०

कलकत्ता, कार्तिक सुदी पंचमी — संशोधक

# प्रकाशकीय-निवेदन ।

प०पू० गच्छाधिपति आ० श्री माणिक्यसागरसूरीश्वरजी महाराज आदि ठाणा वि० सं० २०१० ना वर्षे कपडवंज शहेरमा मीठाभाइ गुलालचन्दना उपाश्रये चातुर्मास बीराज्या हता आ अवसरे तेओश्रीना पवित्र आशीर्वादे आगमोद्धारक-ग्रन्थमालानी स्थापना थएली हती । आ ग्रन्थमालाए त्यारबाद प्रकाशनोनी प्रगति ठीक-ठीक करीछे।

तेओश्रीनी पुण्यकृपाए आ 'सूत्र व्याख्याविधिशतक' नामना ग्रन्थने आगमोद्धारक ग्रन्थमालाना १७ मा'रत्नतरीके प्रगट करतां अमने बहु हर्ष थाय छे ।

आनी प्रेसकोपी मुनिवर्य श्री लाभसागरजी महाराजजीए करेली छे तेमज आनुं संशोधन प० पू० गच्छाधिपति आ० श्री० माणिक्यसागरसूरिजीनी पवित्रदृष्टि नीचे तेओश्रीए करेल छे, ते बदल तेओश्रीनो तेमज जेओए आना प्रकाशनमां द्रव्य तथा प्रति आपवानी सहाय करीछे ते बधानो आभार मानीए छीए ।

लि०

रमणलाल जयचन्द

# शुद्धिपत्रम् ।

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६ | | भुड्कते | भुङ्क्ते |
| | | ,, | ,, |
| ९ | ४ | णाम | णामम |
| २१ | ४ | उवुग्घा | उवुग्घा |
| २२ | ४ | वन्ध्य | व ध्य |
| ३१ | १५ | न्तरो | नन्तरो |
| ३१ | २१ | पमुहा | प्पमुहा |
| ४२ | २ | जिन | निज |
| ४३ | १६ | जन | जैन |
| ४८ | १८ | गृह | ग्रह |
| ७९ | ७ | ताया अपरि | ताया परि |
| ८७ | १४ | उद्वृत्त्य | उद्वृत्य |
| ९० | २२ | अनन्तरोक्तागमबाधानुरोधेन प्रज्ञापना वृत्त्यभिप्रायेण च युक्त्या तथा भणने न कश्चिद् दोष इति प्रत्यन्तरे । | |

# सूत्रव्याख्यानविधिशतकस्य विषयानुक्रमः ।

[ ज ]

ॐ नमो जिनाय

आगमोद्धारक–आचार्य–श्रीआनन्दसागरसूरीश्वरेभ्यो नमः ।
महोपाध्यायश्रीधर्मसागरगणिप्रवरप्रणीतं स्वोपज्ञवृत्तिविभूषितं

# व्याख्यानविधिशतकम् ।

॥ श्री गुरुभ्यो नमः ॥ इह हि तावत् जैनप्रवचनमात्रस्य व्याख्यानविधेर्दिशं दर्शयितुं सूत्रव्याख्यानविधिशतकाभिधानस्य प्रकरणस्य निर्विघ्नपरिसमाप्त्यर्थं मंगलं, श्रोतुः प्रवृत्त्यर्थं चाभिधेयं दिदर्शयिषुः प्रथमगाथामाह––

णमिऊण महावीरं, जिणवयणं अत्थवायगं गहिउं ।
सुत्तरयणाइ रइयं, जह णायं तह पवक्खामि ॥ १ ॥

व्याख्या––महावीरं–श्रीमहावीरनामानं तीर्थंकरं, नत्वा–प्रणम्य, जिनवचनं–तीर्थंकृद्भाषितं, अर्थवाचकं–जीवाजीवादि-पदार्थवाचकं शब्दसमूहं, गृहीत्वा आदाय तीर्थंकृन्मुखान्नि-शम्य, सूत्ररचनया–गद्यपद्यबन्धुररचनया ( रचितं ) निबद्धं सत् यथा ज्ञातं–गुरुपारम्पर्यागतेनाऽऽगमेनावगतं तथा वक्ष्यामीति । अत्र प्रथमपादेन मंगलमुत्तरपादत्रिकेण चाभिधेयं दर्शितमिति गाथार्थः ॥ १ ॥

अथ यथा ज्ञातं तथाऽऽगमोक्तमेव गाथामाह––

अत्थं भासइ अरहा, सुत्तं गंथंति गणहरा निउणं ।
सासणस्स हिअट्ठाए, तओ सुत्तं पवत्तइ ॥ २ ॥

व्याख्या—अर्थं जीवादिपदार्थं, कारणे कार्योपचारात् पदार्थविषयकज्ञानजनकत्वेन जीवाजीवादिपदार्थवाचकशब्द-समूह, भाषतेऽर्हन्–जिनेन्द्र, तत् श्रुत्वा गणधरा –गौतमादय सूत्र—गद्यपद्यरचनात्मक वक्ष्यमाणनिर्दोषत्वाद्यष्टगुणोपेत, ग्रथ्नन्ति निबध्नन्ति, कथ ? निपुण यथा स्यात्तथा, सूत्ररचनायां नैपुण्य तावत् सूत्रलक्षणोपेतसूत्ररचनेनैव स्यात्। तत्र सूत्रलक्षण-मनन्तर वक्ष्यते। अथ सूत्रलक्षणोपेतसूत्ररचनाया प्रयोजनमाह–'सासणस्स' इत्यादि। शासनस्य हितार्थं–सर्वसम्पत्प्राप्तिहेतव इत्यर्थं। अनेन भणनेन तीर्थव्यतिरिक्तानां लौकिकलोकोत्तर-मिथ्यादृशा सम्यक्त्वानभिमुखाना हित न भवत्येवेत्यर्थादापन्न मवसातव्य, मिथ्यादृगभिमतमार्गाणा नाशकत्वात्। यदाऽऽगम –

णिव्वुइपहसासणय, जयइ सया सव्वभावदेसणय।
कुसमयमयणासणय, जिणिंदवरवीरसासणय ॥१॥

इति सूत्ररचनादिनादारभ्य तीर्थं यावत्सूत्रप्रवृत्तिरिति गाथार्थं ॥ २ ॥

अथ गणधररचितेषु सूत्रेषु किं प्रथममध्ययन ? तत्रापि किं प्रथम पदमिति दर्शयन्नाह–

सव्वेसिं सुत्ताण, सामाइअसुत्तमाइमज्झयण।
तस्साइपय तु णमो—अरिहताण समयसिद्ध ॥३॥

व्याख्या–सर्वेषा सूत्राणा–गणधररचिताना मध्ये प्रथम मध्ययन सामायिकसूत्र 'सामाइअमाइअ सुअनाण जाव बिंदु-साराओ'त्ति आवश्यकनिर्युक्तिवचनात्। तस्याप्याद्य पद

"णमो अरिहंताण'मिति समयसिद्ध—समये जैनशासने बालका नामपि प्रतीतत्वात् सिद्ध सिद्धिप्राप्त, नमस्कारस्य सामायिका ध्ययनान्तर्गतत्वादिति गाथार्थ ॥ १ ॥

अथ 'नमो अरिहंताण' मितिपदस्य सूत्रत्वेन तल्लक्षणपरिज्ञापनाय सामान्यतो गणधरकृतसूत्रस्य स्वरूपमाह—

**गणहररइय सुत्तं, लक्खणजुत्त हविज्ज णियमेण ।**
**तल्लक्खण तु आगम भणिअ तह किंचि दसेमि ॥ ४ ॥**

व्याख्या—गणधररचित सूत्र नियमेन-निश्चयेन लक्षणयुक्त, एवो गम्या, लक्षणयुक्तमेव भवेत् । तच्च यथाऽऽगमे भणित तथा किंचिद्दर्शयामीति गाथार्थ ॥ ४ ॥

अथ सूत्रलक्षणमाह—

**अप्पग्गथ १ महत्थ २, बत्तीसादोसविरहिअ ३ ज च ।**
**लक्खणजुत्त सुत्त ४, अट्ठहि अ गुणेहि उववेअ ॥ ५ ॥**

व्याख्या—अल्पग्रन्थ च महार्थं चेति विग्रह । उत्पाद व्ययध्रौव्ययुक्त सदितिवत् द्वात्रिंशद्दोषरहित यच्च लक्षणयुक्त अष्टभिर्गुणैर(प)पर्त सूत्र भवति । ते चाष्टौ गुणा अमी—

**णिद्दोम १ सारवत च २ हउजुत्त ३ मलकिअ ४ ।**
**उवणीय ५ सोवयार च ६, मिअ ७ महुर ८ मेव य ॥१॥ त्ति ।**

तत्र निर्दोष च वक्ष्यमाणद्वात्रिंशद्दोषरहित, सारवत् बहुपर्याय गोशब्दवत् सामायिकवद्वा, अन्वयव्यतिरेकलक्षणा हेतवस्तैर्युक्त, अलकृत—उपमानादिभिरुपेत, उपनीत च उपनयोपसहृत, सोपचार अग्राम्याभिधान, मित वर्णादिनियतपरिमाण, मधुर श्रवण

मनोहरमिति। अल्पग्रन्थमहार्थताभणनेन निर्युक्तिभाष्यचूर्णी दयोऽभ्युपगन्तव्या इति दर्शितं। तेषामेव सूत्रार्थरूपत्वात्, अन्यथा महार्थताया असम्भवात्। क्वचिदन्येऽपि सूत्रगुणा यथा-

अप्पक्खर१ मसंदिद्धं २, सारवं ३ विस्सओमुहं ४।

अत्थोभ ५ मणवज्जं ६, सुत्त सव्वण्णुभासिअं ॥ १ ॥

अल्पाक्षर—मिताक्षरं सामायिकाभिधानवत्, असन्दिग्ध सैन्धवशब्दवत् लवणोदकाद्यनेकार्थसंशयकारि न भवति, सार वत्–बहुपर्याय, विश्वतोमुखं प्रतिसूत्रमनुयोगचतुष्टयाभिधानात्, अस्तोभक–वैहेहकारादिच्छिद्रपूरणस्तोभशून्य स्तोभका निपाता, अनवद्य—अगर्ह्य अहिंसाद्यभिधायकं 'षट्शतानि नियुज्यन्ते, पशूनां मध्यमेऽहनि। अश्वमेधस्य वचनान्यूनानि पशुभिस्त्रिभि' ॥१॥ रित्यादिवचनवत् हिंसाद्यभिधायकं न भवति। एवंविधं सूत्र सर्वज्ञभाषितं भवतीति गाथार्थं ॥ ५ ॥

अथ सूत्रलक्षणे भणितान् द्वात्रिंशतो दोषानाह–

अलिअ १ मुवघायजणय २, इच्चाइअमधिदोसपज्जता।

बत्तीसा सुत्तदोसा, भणिआ णिज्जुत्तिअणुओगे ॥ ६ ॥

व्याख्या— अलीकोपघातजनकमित्यादिसर्वदोषपर्यंता द्वात्रिंशद्दोषा सूत्रस्य भणिता निर्युक्त्यनुयोगे निर्युक्तिव्याख्याने अर्थान्नमस्कारनिर्युक्तिव्याख्यानस्यादौ श्रीहरिभद्रसूरिभिरिति गम्य, तथाहि—

अलियं १ मुवघायजणय २, निरत्थय ३

मवत्थय ४ छल ५ दुहिल ६।

णिम्मार ७ महिअ ८ मूण ९
पुणरुत्त १० वाहय ११ मजुत्त १२ ॥ १ ॥
कमभिण्ण १३ वयणभिण्ण १४,
विभत्तिभिण्ण १५ च लिंगभिण्ण १६ च ।
अणभिहिअ १७ मपयमेव य १८,
सहावहीण १९ ववहिअ २० च ॥ २ ॥
काल २१ जइ २२ च्छवि २३ दोसा
समयविरुद्ध २४ च वयणमित्त २५ च ।
अत्थावत्तीदोसो २६, णेओ असमासदोसा२७ अ ॥ ३ ॥
उवमा २८ रूवगदोसो २९, णिद्देस ३०
पयत्थ ३१ सधिदोसो अ ३२ ।
एए उत्तसुत्तदोसा, बत्तीस हुंति णायव्वा ॥ ४ ॥

एतासां गाथानां वृत्तिव्याख्यानुसारेण सङ्क्षेपार्थस्त्वेव-अलीक अनृत अभूतोद्भावन भूतनिह्नवश्च ईश्वरकर्तृक जगत्, नास्त्यात्मेत्यादि । १ । उपघातजनक जीवघातहेतु, यथा-वेद विहिता हिंसा धर्मायेत्यादि ।२। निरर्थक-वर्णादिनिर्देशमात्र अ आ इ ई इत्यादि । ३ । अपार्थक पौर्वापर्यादप्रतिसम्बद्धार्थं, यथा दश दाडिमानीत्यादि । ४ । छल-नवकम्बलो देवदत्त इत्यादि । ५ । द्रुहिल-द्रोहस्वभाव, यथा-यस्य बुद्धिर्न लिप्येत, हत्वा सर्वमिदं जगत् इत्यादि । ६ । निस्सार परिफल्गु, वेदवचनवत् । ७ । अधिक-वर्णादिभि । ८ । तैरेव हीन न्यून । ९ । पुनरुक्तता शब्दतोऽर्थतश्च इन्द्र इन्द्र इत्यादि,

इद्र दाम इत्यादि। अथवा अर्थादापन्नस्यार्थस्य स्वशब्देन पुनरुक्तता, यथा देवदत्तो दिवा न भुड्क्ते इत्युक्ते अर्थाद्रात्रौ भुड्क्ते इति, तस्य च साक्षाच्छब्देन भगन पुनरुक्तता। १०। व्याहत पूर्वापरव्याहति, यथा कर्म नास्ति फल चास्ति कर्ता च नास्तीत्यादि। ११। अयुक्त–अनुपपत्तिक्रम, यथा–तेषां गजतटभ्रष्टै र्गजानां मदबिन्दुभि। प्रावर्तत नदी घोरा, हस्त्यश्वरथवाहिनी ॥१॥ त्यादि। १२। क्रमभिन्न यथा–शब्दस्पर्शादय श्रोत्रचक्षुरादीनां विषय, तत्र रूपशब्दादय इति भणन। १३। वचनभिन्न-यथा–वृक्षावेतौ पुष्पिता इत्यादि। १४। विभक्तिभिन्न विभक्तिव्यत्यय, एष वृक्ष इति वक्तव्ये एष वृक्षमिति भणन। १५। लिङ्गभिन्न लिङ्गव्यत्यय, यथा अय स्त्रीरित्यादि। १६। अनभिहित स्वसिद्धान्तेऽनुपदिष्ट, यथा वैशेषिकस्य दशम द्रव्य प्रकृतिरूपमित्यादि। १७। अपद-अन्यच्छन्दोऽधिकारे अन्यच्छन्दोऽभिधान, यथा आर्यापदे वैतालीयाभिधान ॥ १८ ॥ स्वभावहीन-वस्तुन स्वभावतोऽयथाभिधान, यथा शीतो वह्निरित्यादि। १९। व्यवहित अन्तर्हित प्रकृतमुत्सृज्याप्रकृत व्यासतोऽभिधाय पुन प्रकृतभणन। २०। कालदोष कालव्यत्यय, यथा रामो वने विशतीत्यादि। २१। यतिदोष अस्थानविरतिरविरतिर्वा। २२। छवि अलङ्कारविशेषस्तेन शून्य। २३। समय विरुद्धच-स्वसिद्धान्तविरोधि, यथा-वैशेषिकस्य सप्तम पदार्थ प्रकृतिरूप। २४। वचनमात्र यथा अय प्रदेशो लोकमध्य-

मित्यादिमणन । २५ । अर्थापत्तिदोष –यत्रार्थादनिष्टापत्ति, यथा ब्राह्मणो न हन्तव्य इत्यर्थादब्राह्मणघातापत्ति । २६ । असमासदोष समासविधौ सत्यसमासकरण, यथा राजपुरुष इत्यत्र तत्पुरुषसमासे कर्तव्ये विशेषणसमासकरण बहुव्रीहिसमास करण वेत्यादि । २७ । उपमादोषो-यत्र हीनाधिका उपमा क्रियते, यथा मेरु सर्षपोपम, सर्षपो मेरुसनिभ इत्यादि ।२८। रूपकदोष यथा पर्वते निरूपयितव्ये शिखरनिरूपण । २९ । निर्देशदोषो-वाक्यासमाप्तिदोष, यथा–देवदत्त स्थाल्यामोदन मित्येव वक्ति, न पुन पचतीत्यादि ३० । पदार्थदोष –यत्र वस्तुन पर्यायस्य पदार्थान्तरत्वेन कल्पना, यथा द्रव्यपर्यायाणा सत्तादीना पदार्थान्तरत्वेन कल्पन वैशेषिकस्य ३१ । असन्धिदोष –सन्धि प्राप्तौ तदकरण दुष्टसन्धिकरण वेत्यादि ३२ । इत्येव सूत्रस्य द्वात्रिंशद्दोषा हारिभद्र्या सविस्तर भणिता, अनुयोगद्वारे च 'अप्पग्गथमहत्थ बत्तीसादोसविरहिअ ज चे'त्यादिना सूचिता अपि तद्वृत्तावतिदिष्टा इतिगाथार्थ ॥६॥

अथोक्तलक्षणस्य सूत्रस्यानुयोग कथ केन कर्तव्य केन च श्रोतव्य ? इत्याह––

**एवविह सुत्तस्स उ, तिहिं पयारेहिं होइ अणुओगो ।**
**कायव्वो सुगुरूहिं, सोअव्वो णिउणसीसेहिं ॥७॥**

व्याख्या––एवविधस्य सूत्रस्यानुयोगो-व्याख्यान, त्रिभि प्रकारैरनन्तरवक्ष्यमाणगाथोक्तप्रकारै सुगुरुभि कर्तव्य, श्रोतव्य चकारो गम्य, श्रोतव्यश्च निपुणशिष्यै । तत्र गुरो शोभनत्व

तावत्, अर्थतस्तीर्थंकरात् सूत्रतश्च गणधरात् अच्छिन्नपरम्परागतेन उद्देशसमुद्देशादिविधिना 'सुअणाणस्स उद्देसो समुद्देसो अणुण्णा अणुओगो पवत्तइ' त्ति वचनात्, उपात्तसूत्रार्थधारित्वेनैव। गुरुत्व च सयतत्वेनैवावसातव्य, सयतानामेव सूत्रार्थयोरनुज्ञादानेऽधिकारात्।

यदागम —'तिविहा समणुण्णा प० त०—आयरियत्ताए १, उवज्झायत्ताए २, गणित्ताए ३', त्ति श्री स्थानांगे [ सू० १७४ ]। अत्र प्रथमभङ्गे अनुयोगाचार्य एवावसातव्य। एवविधेन गुरुणा क्रियमाणोऽनुयोगो निपुणशिष्यैश्च श्रोतव्य इति। अत्र शिष्यस्य नैपुण्य तावत्, सुगुरूक्तविधिना गृहीत सार्थ सूत्र शुभफलदं भवति, न पुनरितरथापीति सम्यग्परिज्ञाने नावसातव्य। अत एव सुगुरुभिरपि वाचनायोग्यत्वेन परीक्षा प्राप्तस्यैव विनेयस्य वाचना दातव्या, न पुनरितरस्यापि। यदागम —'तओ अवायणिज्जा प० त० अविणीए १, विगइपडिबद्धे २, अविओसिअपाहुडे ३', त्ति, श्रीस्थानांगे [ सू० २०३ ]। एतद्वृत्तौ च—'सवासिता अपि वाचनाया अयोग्या, न वाचनीया —न सूत्र पाठनीया, अर्थमप्यश्रावणीया। सूत्रापक्षयार्थस्य गुरुत्वात्। तथा अव्यवसितप्राभृतक्रोऽनुपशान्तक्रोधो भन्तव्य'। तथा अयोग्यस्य शिष्यस्य वाचनादातुर्भावतस्तीर्थच्छेदपातक स्यात्। यदागम —

'इहराउ मुसावाओ, पवयणखिसाय होइ लोगमि।
सेसाणवि गुणहाणी, तित्थुच्छेओ अ भावेण ॥१॥'ति।

एतच्च समनुनासूत्रस्य व्याख्याया भाष्यकारवचन । एव सुशिष्यस्यापि कालतस्त्रिवर्षादिपर्यायप्राप्तस्याचारांगादेर्वाचना दातव्या । यदागम --

तिवरिसपरिआगस्स उ, आयारपकप्प णामज्झयण ।
चउवरिसपरिआगस्स उ सूअगड णाम अगति ॥१॥

इत्यादि व्यवहारसूत्रे । एव चानुज्ञातसूत्रार्थस्य साधोर्धर्मकथायामप्यधिकारो, न पुनर्गृहस्थादे । यदागम ---

'चत्तारि पुरिसजाया प० त०—आघवतित्ता णाममेगे णो उञ्छजीविसपन्ने' इत्यादिचतुर्भङ्गीवृत्तौ 'आख्यायक सूत्रस्य, न चोञ्छजीविकासम्पन्न –अनेषणानिरत इत्यर्थ , स चापद्गत सविग्न सविग्नपाक्षिको वेत्यादि यावत् द्वितीयभगे यथाच्छन्द , तृतीये साधु , चतुर्थे गृहस्थादि इति' । एव च सविग्नपाक्षिकसाधुव्यतिरिक्ताना धर्मकथायामनधिकार एव भणित । तेन तेषा समीप धर्मकथाश्रवण महापापमेव । अत एव गोष्ठामाहिलसमीप धर्मकथाश्रवण श्रीसेनेन प्रतिषिद्ध । एतेन एतेऽपि धर्ममेवोपदिशन्ति, तच्छ्रवणे को दोष ? इति भ्रान्तिरपि निरस्ता, जिनानामुल्लङ्घ्य प्रवृत्तेर्महापापरूपत्वात् । किञ्च सर्वेषामपि वादिनामुपदेशो निजनिजमार्गप्रवृत्तिहेतुरेव भवति, तन्मार्गप्रवर्तन चो मार्गप्रवृत्तिरूपत्वेन महानर्थरूपमेवेति पर्यालोच्य । यदि च पर कदाचित् श्रावकोऽपि निजकुटुम्बस्य पुरस्ताद्धर्म कथयति, तदा गुरव इत्थमादिशन्तीति गुरूपदेश पारतन्त्र्येणैव जिनाना, न पुन साधुवत्सभाप्रबन्धेनेति श्रावक-

प्रतिक्रमणचूर्ण्यादौ । एतेन पुस्तकसिद्धान्तपुरस्कारेण नवीनमार्ग-व्यवस्थापका सर्वेऽपि जैनागमविरोपका एवेति दर्शित बोध्य । सिद्धान्तोक्तव्यतिकराभावेऽपि अ ययनाध्यापनोपदेशादिषु प्रवर्त नात् । उक्तव्यतिकरस्तु परम्पराशून्याना लेशतोऽपि न भवति, तेषा जैनागमस्य लेशतोप्यभावात् । जैनप्रवचने च साम्प्रतमा गम परम्परागम एव भवतीत्यग्रे दर्शयिष्यते । अत एव तेषा जैनागमवचनानुवादोऽपि न भवति, नवीनमार्गप्रकाशकत्वेन शिवभूतिचन्द्रप्रभाचार्यादीना स्वयमेव देशस्वरूपत्वादित्यग्रे व्यक्तिकरिष्यत इति गाथार्थ ॥७॥

अथानुयोगस्य प्रकारत्रय दिदर्शयिषु भगवत्याद्याग-मोक्तामेव गाथामाह––

**सुत्तत्थो खलु पढमो, बीओ णिज्जुत्तिमीसओ भणिओ।**
**तइयो अ णिरवसेसो, एस विही होइ अणुओगे ॥८॥**

व्याख्या–सूत्रस्यार्थ सूत्रार्थ, सूत्रार्थ एव केवल प्रति-पाद्यते यस्मिन्ननुयोगेऽसौ सूत्रार्थ इत्युच्यते। सूत्रमात्रप्रति पादनप्रधानोऽर्थ सूत्रार्थ । खलुशब्दस्त्वेवकारार्थ । स चाव-धारणे । एतदुक्त भवति गुरुणा सूत्रार्थमात्राभिधायक प्रथमा-नुयोगा कर्तव्य । मा भूत् प्राथमिकविनेयस्य मतिसम्मोह । द्वितीयस्तु अनुयोगा निर्युक्तिमिश्रक कार्य । तत्र निर्युक्तिरपि सव्याख्याना वक्तव्या । तस्या अपि सूत्रव्याख्यानता निजव्याख्या नार्थैव भवति, सूत्रस्येव तस्या अपि सूत्रत्वेन दुरवगाहत्वात् । अत एव निर्युक्तेरपि अनुयोग सूत्रस्येवाविशेषेण भणित । यदा–

गम –'से किं तं अणुगमे ? दुविहे प० तं० सुत्ताणुगमे निज्जु-त्तिअणुगमे' त्ति श्री अनुयोगद्वारे । तृतीयस्तु निक्षेप –प्रसङ्गानुप्रसङ्गागत सर्वाप्यर्थो वाच्य । तत्र प्रसङ्गागतो भाष्य न्तद् व्याख्यानरूप । अनुप्रसङ्गागतस्तु तदनुगतचरित्रादिरूप पुरो वक्ष्यते इति गाथार्थ ॥ ८ ॥

अथ त्रयाणामपि प्रकाराणा मध्ये मणितिमधिकृत्य विशेषमाह--

तत्थणुओगो पढमो, पढमपयस्सेव पुव्वभणियस्स ।
सुपसिद्धो इअगाण दसेमि दिसपि तस्सेव ॥ ६ ॥

व्याख्या तत्र त्रिषु अनुयोगप्रकारेषु, पूर्वभणितस्य 'णमो अरिहंताण' मित्येतावन्मात्रस्य प्रथमपदस्य प्रथमोऽनु योग सुप्रसिद्ध, शब्दस्फुटार्थमात्रगम्यत्वात् । स चैव-नम इति नैपातिक पद करचरणमस्तकै सुप्रणिधानरूपो नमस्कारो भवत्वित्यर्थाभिधायक । केभ्यो ? अर्हद्भ्य –अमरवरनिर्मिताष्ट महाप्रातिहार्यरूपां पूजामर्हन्तस्तेभ्य इत्याख्यानरूपमात्रस्य । इतरयोस्तु-निर्युक्तिमिश्रक निरवशेषरूपणयोरनुयोगयो 'तस्यैव' णमो अरिहताणमितिपदमात्रस्यैव दिश दर्शयामीति गाथार्थ ।६।

अथ द्वितीयानुयोगस्य स्वरूप दर्शयन् निर्युक्तिविवेकमाह–

जो णिज्जुत्तीजुत्तो, बीओ भणिओ अ सुत्तअणुओगो ।
सा णिज्जुत्ती तिविहा, सुपसिद्धा होइ जिणसमए ॥१०॥

व्याख्या-- य चकारो गम्य, यश्च सूत्रानुयोगो निर्युक्तिमिश्रको द्वितीयो भणित । सा च निर्युक्तिस्त्रिविधा–

**किं १३ कइविह १४ कस्स १५ कहिं १६,**
**केसु १७ कह १८ किच्चिर हवइ काल १९।**
**कइ २० संतर २१ मविरहिअ २२,**
**भवा २३ गरिस २४ फासण २५ निरुत्ती २६ ॥ १३ ॥**
*(युग्मम)*

व्याख्या–चानयो सक्षेपतोऽनुयोगद्वारवृत्ति विस्तरतस्तु आवश्यकनिर्युक्ति - तद्वृत्तिभ्यामेवेत्यनुयोगद्वारवृत्तावपीत्थमेव भणित। तत्रोपोद्घातनिर्युक्तिरावश्यकनिर्युक्त्यन्तर्गता सर्वत्राप्यतिदेशेन वक्तव्या। परमिह सर्वसूत्रसाधारणत्वपरिज्ञानाय द्वार विवेकपरिज्ञानमात्रहेतु किंचिद् व्याख्यान यथा उद्देशनमुद्देश – सामान्याभिधानरूपो यथाध्ययनमित्यादिरूपण वक्तव्य इति क्रिया सर्वत्रापि मन्तव्या १। तथा निर्देशन निर्देश विशेषा भिधान, यथा सामायिकमित्यादि। तथा निर्गमन निर्गम कुत सामायिक निर्गतमिति ३। तथा तौ क्षेत्रकालौ च, ययो सामायिकमुत्पन्न, तौ च वक्तव्यौ ४ ५। कुत पुरुषान्निर्गतमिति ६। तथा केन कारणेन गौतमादयो भगवत्समीप शृण्वन्तीति ७। तथा प्रत्यय, केन प्रत्ययेन भगवतेदमुपदिष्ट ८। तथा लक्षण-सम्यक्त्वसामायिकादीना स्वरूपभणन। तथा नया नैगमा दय १०। तथा समवतार–यो नयो यत्र समवतरति ११। तथानुमत–कस्य व्यवहारादे किं सामायिकमनुमत? १२। किं सामायिक कस्मिन् प्रत्यवतरति? १३। कतिविधमिति १४। कस्य सामायिक १५। क्व सामायिक १६। तथा केषु

द्र व्येषु सामायिक १७। कथ केन प्रकारेण सामायिक स्यात् १८। कियत्काल सामायिक १९। कियन्त सामायि कस्य युगपत् प्रतिपद्यमानका २०। सान्तर कियदन्तरेण सामायिक २१। अविरहित निरन्तर २२। भवा कियन्त उत्कृष्टा २३। आकर्षा कस्मिन् कियन्त २४। स्पर्शना २५। निरुक्ति निश्चिता उक्ति २६। इति षड्विंशतिद्वाराणा विवेक-निमित्त नाममात्रेण व्याख्या। एव च यस्मिन् द्वारे प्रकृत प्रयोजन तत्तद्वारपुरस्कारेणाग्रे वक्ष्यते इति गाथायुग्मार्थ ।१२।१३

अथ कीदृश्या निर्युक्त्या द्वितीय सूत्रस्य व्याख्यान भव तीति दर्शयति—

**एआहिं गाहाहिं, वित्थररूवाहिं जा य णिज्जुत्ती**
**बीए साणुगमाए, अणुओगो सुत्तमित्तस्स ॥१४॥**

व्याख्या—एताभ्यामनन्तरोक्ताभ्या द्वारगाथाभ्या विस्तररूपा, हिरवधारणे, विस्तररूपैव या निर्युक्ति, तया सानु गमया सानुयोगया सूत्रमात्रस्यानुयोगो भवति सानुयोगनिर्यु क्तिमिश्रको द्वितीयोऽनुयोगो भवति। तत्र युक्तियुक्तता सम्मतिस्तु दर्शितैवेति गाथार्थ ॥१४॥

अथ द्वितीयप्रकारव्याख्यानानुसारेण तीर्थातीर्थयो स्वरूपमाह—

**तेण चिअ जस्स णमो अरिहताण ति साणुओगपय।**
**मग्ग त खलु तित्थ, मग्गो सेस अतित्थति ॥१५॥**

व्याख्या—'तेन' प्रागुक्तप्रकारेण द्वितीयव्याख्यानेन, चिअ

एवार्थे, द्वितीयव्याख्यानानुसारेणैव यस्य 'णमो अरिहंताणं' मिति सानुयोगपदं सानुयोगनिर्युक्तिलक्षणव्याख्यानमयुक्तं पदं सामायिकाध्ययनस्य प्रथमपदं 'सम्मति' सम्यग् प्रमाणं भवति, तत् खल्ववधारणे, तदेव तीर्थं साधुसाध्वीश्रावकश्राविकासमुदायात्मकं, मार्गो मोक्षमार्गो भवति । शेष-यस्योक्तप्रकारेण 'णमो अरिहंताणं' मिति पदं प्रमाणं न भवति, तदतीर्थ-तीर्थं न भवेत् । अतीर्थं च जिनाज्ञाबाह्यमत एव उन्मार्ग एवेत्यर्थाद् बोध्यमिति गाथार्थः ॥१६॥

अथ प्रसंगतः प्रकारान्तरेणापि तीर्थस्वरूपमाह---

तं वा तित्थं जं चित्र, णिज्जुत्तिपमुहसव्वसुअठाणं ।
संपइ वीरजिणाओ, उप्पण्णं जाव दुप्पसहो ॥१६॥

व्याख्या---वा अथवा, तत्तीर्थं, चित्र एवार्थे, व्यवहितं सम्बध्यते, तदेव तीर्थं यत् नियुक्तिप्रमुखसर्वश्रुतं निर्युक्तिभाष्यादिकं सकलश्रुतं, तस्य स्थानं आश्रयं, यन्निर्युक्त्यादिसर्वश्रुतस्थानं भवति, तदेव तीर्थमित्यर्थः । तच्च तीर्थं साम्प्रतं पुनः उत्पन्नं कियत्कालं स्थायि ? इत्याह 'संपइ'त्यादि । सम्प्रति-वर्तमानं तीर्थं वीरजिनात् श्रीमहावीरादुत्पन्न-वर्तमानं तीर्थं श्रीमहावीरस्थापितमित्यर्थः । एतेन शिवभूत्यादिव्यवस्थापिता समुदायास्तीर्थानि न भवन्तीति दर्शितं । तेषां श्रीमहावीरस्यव्यवस्थापितं नामानादिग्रन्थे वक्ष्यते । तच्च यावद् प्रसभं दुप्पसहनामाचार्यं तावच्छिन्नं भवतीत्यर्थः । यदागमः---

'जंबुद्दीवे २ भारहे वासे इमीसे ओसप्पिणीए देवाणुप्पि

याण केवइय कालं तित्थं अणुसज्जिस्सइ ? गो० जम्बुद्दीवे २ भारहे वासे इमीसे ओसप्पिणीए इगवीसं वाससहस्साइं तित्थं अणुसज्जिस्सइ' त्ति भग० श० २ उ० ८इति गाथार्थ ।१६।

अथ पुनरपि प्रकारान्तरेण तीर्थं व्यवस्थापयन्नाह—

**तं तित्थं जिणठवियं, जस्साइगरो ण लब्भई अण्णो ।**
**वीराओ वीरेण, दुप्पसहंतं तयं भणिअं ॥१७॥**

व्याख्या——तत्तीर्थं जिनस्थापितं भवेत्, यस्यादिकरो वीरात् श्रीमहावीरतीर्थकरादन्यश्चन्द्रप्रभाचार्यादिवदपरो न लभ्यते । तस्य कर्ता श्रीमहावीर एव । तच्च तीर्थं दुःप्रसभान्तं वीरेण श्रीमहावीरतीर्थकृता, भणितं भगवतीसम्मत्यामाग्प्रदर्शितमेव । तच्च साम्प्रतं परिशेषात् तपागण एव तीर्थं भवति । तस्यादिकर्ताऽयं श्रीमहावीरादपरः कोऽपि नोपलभ्यते । न चैवं पौर्णिमीयकौष्ट्रिकादिसमुदायास्तथा भविष्यतीति शङ्कनीयं । तेषामादिकर्तॄणां चन्द्रप्रभाचार्य जिनदत्ताचार्यादीनां सर्वसम्मतत्वात् तदीयवचनैरेवाग्रे व्यवस्थापयिष्यमाणत्वाच्च । या तु श्रीजगच्चन्द्रसूरितस्तपागण इति ख्यातिः, सा तु यात्रानिमित्तकसंघपतिर्यातिनत् तदानीं तपोमात्रजन्या । तपसः कर्तव्यस्य भगवदाज्ञाविषयत्वात् । यदागमः —

'छट्ठाणा अत्तवतो हिआए सुहाए खमाए णिस्सेसाए आणुगामि अत्ताए भवति । तं० परिआए १ परिआले २ तवे ३ सुए ४ लाहे ५ पूआसक्कारे ६' त्ति श्री स्थानाङ्गे । तेन तथाभूतः स (तपागण) एव परिशेषादच्छिन्नं तीर्थं मन्तव्यमिति गाथार्थः ॥

अथ पुनरपि प्रकारान्तरेण तीर्थं व्यवस्थापयन्नाह—

**अहवा जस्स पमाण, महानिसीह हविज्ज त तित्य ।**
**हरिभद्द त्त लिहिय, महानिसीहस्स आयरिसे ॥१८॥**

व्याख्या—अथवेति प्रकारान्तरद्योतने । यस्य महानिशीथ श्रीमहानिशीथसूत्र प्रमाण, तत्तीर्थं मन्तव्य । एतच्च हरिभद्रोक्त श्रीहरिभद्रसूरिणा भणित, श्रीमहानिशीथाऽऽदर्शे अर्थात् पूर्वाचार्यैर्लिखितमित्यक्षरार्थ । भावार्थस्तु यद्यपि गणधरकृते श्रीमहानिशीथसूत्रे श्रीवज्रस्वामिव्यतिकरो नासीत्, पर तथापि उद्देहिकादिखण्डितपत्रेभ्य प्रवचनहितार्थं यथावबोधमन्योन्य सङ्गत्या श्रीमहानिशीथसूत्रलिखने तस्यैव तृतीयाध्ययने यथा **श्रीहरिभद्रसूरिणा श्रीवज्रस्वामिव्यतिकरो** लिखित । तथाहि—

'एअ तु ज पचमगलमहासुअखधस्स वक्खाण त महया पबधेण अणतगमपज्जवेहिं सुत्तस्स य पिहब्भूआहि णिज्जुत्तिभासचुण्णीहिं जहेव अणतणाणदसणधरेहिं तित्थगरेहिं वक्खाणिअ तहेव समासओ वक्खाणिज्जत आसी । अह अण्णया कालपरिहाणिदोसेण ताओ णिज्जुत्तिभासचुण्णीओ वुच्छिन्नाओ । इओ अ वच्चतेण कालसमएण महड्ढिपत्ते पयाणुसारी वयरसामी नामा दुवालसगसुअहरो समुप्पण्णो । तेणेसो पचमगलमहासुअखधस्स उद्धारो मूलसुत्तमज्झे लिहिओ । मूलसुत्त पुण सुत्तत्ताए गणहरेहिं अत्थत्ताए अरिहतेहिं भगवतेहिं धम्मतित्थगरेहिं तिलोअमहिएहिं वीरजिणिंदेहिं पण्णविअ'ति **श्रीमहानिशीथे** तृतीयाध्ययने। प्रयोजनवशेन लिखित तथा वृद्धसम्प्रदायात्

वृद्धै-पूर्वाचार्यैं श्रीहरिभद्रसूरिव्यतिकरोऽपि तदनन्तरमेव लिखित । तथाहि—

'एत्थ य वुड्ढसपयाओ जत्थ य जस्स ज पय पएणाणुलग्ग सुत्तालावग ण सपज्जइ तत्थ सुअहरेहिं कुलिहिअन्तोसो ण दायव्वो, किन्तु जो सो एअस्स अचितचिंतामणिकप्पभूअस्स महानिसीहसुअक्खधस्स पुव्वायरिसो आसी, तेहिं चेव खडा-खडिएहिं उद्देहिआइहिं हेऊहिं बहवे पत्तगा परिसडिया, अच्चत सुमहत्थातिसयति इम महानिसीहसुयखध कसिणपवय-णस्स परमसारभूअ परमतत्त महत्थ कसिणपवयणवच्छलएण बहुभव्वसत्तोवयारिअ ति काउ तहा आयहिअट्ठयाए आय-रिअहरिभद्दण ज त थ आयरिसे दिट्ट त सव्व समईए साहिऊण लिहिअ अण्णेहिंपि सिद्धसेणदिवायर वुड्ढवाइअजक्खसेण देवगुत्त जसवद्धणखमासमणसीसरविगुत्त णेमिचन्द जिणदासगणि-खवगस-च्चसिरिप्पमुहेहिं जुगप्पहाणसुअहरेहिं बहुमण्णिअमिण' ति ।

एतेन श्रीमहानिशीथश्रुतस्कन्धमधिकृत्य अश्रोतव्ययत्तत्-प्रलापिनो निरस्ता बोध्या । अचिन्त्यचिन्तामणिकल्प श्रीमहा-निशीथसूत्र सकलप्रवचनहितार्थं प्रवचनवत्सलेन श्रीहरिभद्रसूरिणा खण्डितपत्रेभ्य यावद्यथादृष्ट तावदेव स्वमत्या समुचितीकृत्य लिखित तत्कालवर्तिभिर्युगप्रधानश्रुतधरैरभ्युपगतमित्येव लिखि तत्वात् । एतेन य कश्चित् श्रीमहानिशीथसूत्र श्रीहरिभद्रसू रिणा स्वमत्या लिखित, तेनास्येषा बहुश्रुताना सम्यग् श्रद्धान नास्ति, एव श्रीहरिभद्रसूरिणा स्वयमेवोक्त, अतो नास्माक-

मपि श्रद्धानमिति पूर्वापरविरोधपरिज्ञानशून्यो वातिकयाचालो निरस्त एव। तदुक्तरचनानामिह गन्धस्याप्यभावात्। अत्रार्थे श्रीमहानिशीथाऽऽदर्शलिखिता पूर्वाचार्यवचनमम्मतिरेव। तथाहि —'अत्र चतुर्थाध्ययने बहव सैद्धान्तिका कौश्चिदालापकान् न सम्यग् श्रद्दधते इत्येत तैरश्रद्धानैरस्माकपि न सम्यग् श्रद्धानमित्याह श्रीहरिभद्रसूरि, न पुन सर्वमेवेद चतुर्थाध्ययनमन्यानि वा अध्ययनानि, अस्यैव चतुर्थाध्ययनस्यैव कति पयै परिमितैरालापकैरश्रद्धानमित्यर्थ। यत स्थान समवाय जीवाभिगम प्रज्ञापनादिषु न कथञ्चिदिदमाचख्ये-यथा प्रेत्य सन्तापस्थलमस्ति, तद्गुहावासिनस्तु मनुजास्तेषु परमाधार्मिकाणां पुन २ सप्ताष्टवारान् उपपात, तेषा तैर्दारुणैर्वज्रशिलापरट्टक सपुटैर्दलितानां परिपीड्यमानानामपि संवत्सर यावत् प्राणव्यापत्तिर्न भवतीति। वृद्धवादस्तु पुनर्यथा तावदि दमार्ष सूत्र विकृतिश्च नात्र प्रविष्टा, प्रभूताश्चात्र श्रुतस्कन्धे ऽथा सुष्ठु अतिशयेन सातिशयानि गणधरोक्तवचनानीति। तदेव स्थिते न किञ्चिदाशङ्कनीय'। अत्र बहुश्रुतैर्नाम ग्राहेण उत्सासद्गनार्थवचनानि (वाक्यानि) विमुच्य सर्वमपि श्रीमहानिशीथ प्रमाणीकृत। वृद्धैस्तु वाक्यानां विरुद्धार्थत्वमेव नाभ्युपगत। अभ्युपगत चानुक्तमप्युक्तमिति भणित्वा सकल मपि महानिशीथमप्रमाणतया वातिकवाचालैरिति। तत्र निदान तावत् प्रक्रियावाचकनिज निज-वचनविरोधिवचनारमकत्वमेव। तथा च सिद्ध श्रीमहानिशीथसूत्रप्रमाणवादि तीर्थमिति

श्रीहरिभद्रसूरिणोक्तमवसातव्य । अन्यथा प्रागुक्तप्रकारेण वचनानुपपत्ति प्रसज्येत । न चैतत्तीर्थस्वरूप औष्ट्रिकेति प्रमवन तस्यापि श्रीमहानिशीथसूत्रस्याङ्गीकारादिति वाच्य । मुग्धजन भ्रान्तिजनकत्य तस्य तीर्थसमीपस्थियर्थ वचोमात्रेणाङ्गीकारात् कथमन्यथा अनादिसिद्ध पाक्षिक पूर्णिमायामेवासीन, चतुर्दशं तु पर्युषणाचतुर्थीवच्चाचरितेति भणिति स्यात् । तदुक्तमञ्चक इ अष्टमीपाते चतुर्थनपश्चैत्यपरिपाटीप्रमुखमष्टमीकृत्य सप्तम्या चतुर्दशीपाते च पाक्षिककृत्य पूर्णिमायामिति । यत्तु खरतर मेदनिषेधेन त्रिधिप्रपाया चतुर्मासकचतुर्दशीपाते पूर्णिमा युक्तेति भणित, तदपि तीर्थसम्मतपरम्परालोपेन जमालिवत्तीर्थबाह्यताभिव्यञ्जक भवयेव । यदागम —

आयरिअपरपरएण, आगय जो उ आणुपुव्वीए ।
कोवेइ छेअवाई, जमालिनास स णासीहिति ॥१॥

चि सूत्रकृदङ्गनिर्युक्तौ ।

जमालिवत्तीर्थप्रतिपक्षो हि नियमान्मिथ्यादृष्टिरेव स्यात् । तस्य च जिनप्रवचनमात्रस्याप्यप्रामाण्येनाभ्युपगमे कुतो महानिशीथाभ्युपगम ? । तेन लौम्पकस्य 'णमो अरिहताण' मिति पदस्येव तस्यापि श्रीमहानिशीथस्याङ्गीकारोऽपि वचोमात्रेण, न पुनर्भावित इति नातिप्रसङ्ग । यदि वचोमात्रेणाङ्गीकारोऽपि प्रमाणतयाभ्युपगम्यते तर्हि दिगम्बरादय सर्वेऽपि सम्यग्दृश एव भवेयु । देवोऽर्हन्, गुरु सुसाधु, धर्मस्तु केवलीप्रज्ञप्त एवेतिरूपेण देवादीना वचोमात्रेणाभ्युपगमात् । तस्मात्

सर्वेषामपि जैनाऽऽभासानां जैनप्रवचनाभ्युपगमोऽपि निज निजमतिविकल्पितप्रक्रियानुरोधेन द्रव्यत एवोपहास्यकरो मन्तव्य इति तात्पर्यमिति गाथार्थः ॥१०॥

अथ तीर्थव्यतिरिक्तानामुन्मार्गभूतानां विवेकमाह—

सेसा खलु उम्मग्गा, लोइअलोउत्तरेहिं दुविगप्पा।
लोइअ उम्मग्गा पुण, कविलप्पमुहा मुणेअव्वा ॥१९॥

व्याख्या—शेषा—उक्तस्वरूपतीर्थव्यतिरिक्ता उन्मार्गाः, खलुरवधारणे, संसारमार्गा एव। मार्ग इत्यत्रैकवचनं, उन्मार्गा इत्यत्र बहुवचनं च मार्ग एक एव भवति, उन्मार्गास्तु बहव इति ज्ञापनार्थमेव। एतच्च लौकिकमार्गेऽपि प्रतीतमेव। निगमि पितनगराभिमुखं प्रत्येक एव मार्गः, शेषास्तु नवापि दिश उन्मार्गा एव। तेनोन्मार्गा लौकिकलोकोत्तराभ्यां द्विविकल्पा द्विप्रकाराः, सन्तीति शेषः। तत्र लौकिकोन्मार्गाः कपिलप्रमुखाः कापिलेय दर्शन-साङ्ख्यदर्शनमित्यर्थः, तत्प्रमुखाः कापिलेयसौगताक्षपादा दयोऽनेकविधा भिन्नभिन्नस्वरूपाः प्रतीता एव। ते च सर्वेऽपि नयवादा सङ्ख्यया वचनसङ्ख्याका अपि सम्भवन्ति। यदागम—

जावइआ वयणपहा, तावइआ चेव हुंति णयवाया।
जावइया णयवाया, वयणपहा तत्तिया चेव ॥१॥

त्ति गाथार्थः ॥१९॥

अथ लोकोत्तरोन्मार्गानाह—

लोउत्तरा य भणइ, दिगंबरप्पमुहपासपज्जंता।
ते पुण तित्थाभासा, तित्थयराभाससंठविआ ॥२०॥

व्याख्या—लोकोत्तराश्चो मार्गा—लोकोत्तरमिथ्यादृष्टय, सम्प्रति वर्तमानकाले, दिगम्बरप्रमुखा पाशपर्यन्ता—पाशचन्द्रीय-पर्यवसाना, प्रमुखशब्दात् पौर्णिमीयकौष्ट्रिकाञ्चलिक-सार्द्ध पौर्णिमीयकाऽऽगमिक लौम्पक-कटुक वन्ध्यनामानो ग्राह्या। ते च तीर्थाभासा तीर्थवदाभासन्ते इति तीर्थाभासा। ते च किं लक्षणा ? तीर्थकराभाससंस्थापिता 'कारणानुरूप कार्य' मिति वचनात् तीर्थाऽऽभासाम्तीर्थकराऽऽभाससंस्थापिता एव भवन्ति। तेन तीर्थकराभासा शिवभूति१ चन्द्रप्रभाचार्य२ जिनदत्ताचार्य३ नरसिंहोपाध्याय४ सुमतिसिंहाचार्य५ शीलदेव६ लुम्पक७ कटुक ८ वन्ध्य९ पाशचन्द्रनामभि क्रमेणावसातव्या इति गाथार्थ ॥ २० ॥

अथ दशापि तीर्थाभासाम्तीर्थकराभासाश्चोपोद्घातनिर्युक्तौ ये यथा दूषिता तथा तान् क्रमेणाह—

तेसु वि णिज्जुत्तीए, णामग्गाहण दूमिआ खमणो।
सेसा परूवणाए, णिअमेण दूसिया हुंति ॥२१॥

व्याख्या—तेष्वपि—दशस्वपि नामग्राहेण क्षपणको दिगम्बरो दूषित, शेषास्तु प्ररूपणया नियमेन दूषिता भवन्ति। क्व ? निर्युक्तौ अथादुपोद्घातनिर्युक्ताविति गाथार्थ ॥२१॥

अथोपोद्घातनिर्युक्तावपि बोटिक कस्मिन् द्वारे भणित ? इति दर्शयन्नाह—

छव्वीसा इक्कारस, दार तस्सेव जा य णिज्जुत्ती।
तीए जमालिपमुहा, बोडियपज्जतया भणिया ॥२२॥

व्याख्या--षड्विंशतौ एकादश द्वार समवतारलक्षण, तस्यैव या निर्युक्ति, तस्या जमालिप्रमुखा बोटिकपर्यंता भणिता । तत्राविद्यमानापत्यत्वेन जमाल्यादीन परित्यज्य बोटिकोऽधिकृतो वक्ष्यते इति गाथार्थं ॥२२॥

अथ बोटिकस्योत्पत्तिमधिकृत्य काल क्षेत्र च निर्युक्ति गाथयैवाह--

छव्वाससयाइ णवुत्तराइ, तइआ सिद्धि गयस्स वीरस्स ।
तो बोडिआण दिट्ठि, रहवीरपुरे समुप्पण्णा ॥२३॥

व्याख्या च सुगमैवेति गाथार्थ. ॥२३॥

अथ बोटिकस्योत्पत्तिनिमित्तपरिज्ञानाय निर्युक्तिगाथामाह-

रहवीरपुर णयर, दीवगमुज्जाण अज्जकण्हे य ।
सिवभूइस्सुवहिंमि य, पुच्छा थेराण कहणा य ॥२४॥

व्याख्या-रथवीरपुर नगरमित्यादि यावत् 'तत्थ य दीवग मुज्जाण, तत्थ य अज्जकण्हा णाम आयरिआ समोसढा, तत्थ य एगो सहस्समल्लो सिवभूइ णामे'त्यादि सर्वं हारिभद्रीयवृत्तौ कथानकादवसातव्यमिति गाथार्थ ॥२४॥

अथ बोटिकस्य नाग्न्यव्रत मरीचिवचनेन दूषयितु निर्युक्ति-गाथामाह-

सुक्किलरा य समणा, णिरवरा मज्झ धाउरत्ताइ ।
हुतु अ मे वत्थाइ, अरिहोमि कसायकलुसमई ॥२५॥

व्याख्या च वृत्तिगता यथा-शुक्लान्यम्बराणि-वस्त्राणि येषा ते शुक्लाम्बरा श्रमणा । तथा निर्गतमम्बर येभ्यस्ते निर-

म्बरा जिनकल्पिकादय, 'मज्झत्ति' ममेत्यादि हारिभद्रीयवृत्तितोऽवसातव्यमिति गाथार्थ ॥२५॥

अथ मरीचिना यदुक्त, तद्व्यक्तीकुर्वन्नाह—

**तेणिह समणा दुविहा, कहिआ ते थेरकप्पजिणकप्पा।**
**जिणकप्पो वुच्छिन्नो, जम्बूनिव्वाणसमयंमि ॥२६॥**

व्याख्या—येन कारणेनेह जिनकल्पिकादय एव निरम्बरा भणिता, तेन कारणेनेह श्रमणा द्विविधा कथिता। ते च स्थविरकल्पिका जिनकल्पिकाश्चेति। तत्र जिनकल्प साम्प्रत नास्तीति दर्शयति 'जिणकप्पो'त्ति। जिनकल्पो जम्बूनिर्वाण समये व्युच्छिन्न। यदुक्त—

१ २ ३ ४ ५ ६ ७
मण परमोहि-पुलाए, आहारग खवग—उवसमे-कप्पे।
८ ९ १०
सनमतिग केवल सिज्झणा य जंबूम्मि वुच्छिन्ना ॥१॥

इति प्रवचनसारोद्धारे। तत्र कप्पोत्ति जिनकल्प इति गाथार्थ ॥२६॥

अथ साम्प्रत क कल्प ? कथ भवती याह—

**सपइ अ थेरकप्पो, सज्झो आहारवत्थमाईहिं।**
**णहि सामग्गिअभावा, कज्ज सपज्जए किंचि ॥२७॥**

व्याख्या—सम्प्रति एक स्थविरकल्पो, वर्तते इति गम्य। स च आहारवस्त्रादिभि साध्य। आहारादिकमन्तरेण स्थविरकल्पिकानां शरीरस्थितिरेव न भवति, शरीराभावाच्च एकोऽपि कल्पो न भवति, कुत स्थविरकल्प ? अत एव श्री स्थानांगे—

'कप्पति निग्गथाण वा निग्गथीण वा तओ वत्थाइ' मित्यादिना साधूनां वस्त्रादे कल्प्यतापि भणिता। नहि कारणसामग्र्यभावे किंचि कार्यं सम्पद्यते। यदुक्त-
'नाकारण भवेत्कार्यं, नान्यकारणकारण।
अन्यथा न व्यवस्था स्यात्, कार्यकारणयो क्वचित् ॥१॥
इति गाथार्थ ॥२७॥

अथैव नाममात्रेण दूषितो दिगम्बर किं कृतवानित्याह—
इच्चाइ अ णिज्जुत्तिपमुहवयणेहिं दूसिओ खमणो।
तित्थं व तेण (मओ) तेण, मूलाओ आगमो चइओ ॥२८॥

व्याख्या—इत्यादिनिर्युक्तिप्रमुखवचनैर्दूषित क्षपणक-दिगम्बर, तीर्थमिव तीर्थाभिमत आगम अधिगम्य, आगमो ऽपि मूलात् त्यक्त। पौर्णिमीयकादीनामिव अन्तोऽपि निज-प्रक्रियारूपतयापि नाभ्युपगत तेन। यद्यपि तीर्थाभिमतागम सम्मत्या दिगम्बरमतनिराकरण प्रायोऽसम्भवि, तथापि देवोऽर्हन्नेवेत्यादिभणनेन अयमपि मार्ग सिद्धान्तोक्तो भविष्य तीति मुग्धजनभ्रान्तिनिरासार्थमयमात्मन्यमिति गाथार्थ ॥२८॥

अथ मुग्धजनभ्रान्तिकारण दिगम्बरवचो निराकुर्वन्नाह—
धम्मोवगरणमित्त, परिग्गहो ता सुवण्णजिणपडिमा।
परिमिअपरिग्गहम्मि, जइ हुज्जा देसविरईण ॥२९॥

व्याख्या—धर्मोपकरणमात्र यदि परिग्रह उच्यते तर्हि सुवर्णजिनप्रतिमा, उपलक्षणात् रजतरत्नादिप्रतिमा तत्पूजो पकरणानि सौवर्णकलशादीनि च परिग्रहतया देशविरतीनां

परिमितपरिग्रहेऽर्थाद्‌ गर्भेष्वेयु । तदपि त्यजनबुद्ध्या । यत परिमितपरिग्रहोऽपि सर्वपरिग्रहत्यजनबुद्धिमतामेव भवति । अत एव स्वल्प स्वल्पतर परिग्रह शोभन । यदुक्त—

'ससारमूलमारम्भास्तेषा हेतु परिग्रह ।

तस्मादुपासक कुर्याद्, अल्पमल्प परिग्रह ॥१॥ मिति योगशास्त्रे । एव सुवर्णप्रतिमादिकमपि स्वल्प स्वल्पतरमेव शोभन सम्पद्यते, परिग्रहरूपत्वात् । तच्च न कस्यापि सम्मत । तस्मा यथा सुवर्णप्रतिमादिक ( परिमित ) परिग्रहो न भवति, तथा साधूनां धर्मोपकरणान्यपि परिग्रहो न भवति, धर्मोपकरण व्यतिरिक्त परिग्रह इतिवचनात् । पर साधूना मूर्च्छयाधि कवस्त्रपात्रादिधारण धर्मोपकरणमेव न भवति 'मुच्छा परिग्गहो वुत्तो' त्तिवचनात । अत एव साधूना स्वशरीरेऽपि मूर्च्छा न भवति 'अवि अप्पणो वि देहमि नायरति ममाइअ तिवच नात् । वस्त्रादिमूर्च्छायाश्च शरीरमूर्च्छाऽऽयत्तत्वादिति गाथार्थ ॥

अथ प्ररूपणयोद्दिष्टमार्गानाह—

अह जे परूवणाए, उम्मग्गा ते अ मग्गपडिवक्खा ।
चदप्पहाइहितो, सजाया लोअविक्खाया ॥३०॥

व्याख्या—'अथे'ति नाममात्रेण दूषितस्य दिगम्बरस्य भणनानन्तर ये प्ररूपणया उन्मार्गा , ते च मार्गस्य–तीर्थस्य प्रतिपक्षा एव, चन्द्रप्रभाचार्यादिभ्य सञ्जाता लोकवि ख्याता । यावन्त पूर्णिमापाक्षिकाभ्युपगन्तार , तेषा सर्वेषामपि चन्द्रप्रभाचार्य पितामह । तेन ततो जाता आञ्चलिकागमि

कादयो लोकविख्याता –सम्यग्दृष्टिलोकनिश्रुता । सम्यग्दृशो हि जानन्ति-यदेते पौर्णिमीयकानिर्गता इति गाथार्थ ॥

अथ यया निर्युक्त्या पूर्णिमापक्ष उन्मार्गा नायते, ता निर्युक्तिमाह

**महुराए जिणदासो, इच्चाइआ णिगमस्स णिज्जुत्ती ।**
**तीए चउदसिमग्गो, उम्मग्गो पुण्णिमापक्खो ॥३१॥**

व्याख्या—महुराए जिणदासो इत्यादिरूपा–

'महुराए जिणदासो, आभीर विवाह गोण उववासो ।
भडीर मित्त वच्छे, (अवच्चे) भत्ते णागोहि आगमण ॥१॥

ति गाथा निर्गमस्य षड्विंशतिद्वारेषु तृतीयद्वारस्य निर्युक्तिरपि उपसर्गनिर्युक्त्यन्तर्गता 'तीए' त्ति तस्या निर्युक्तौ चतुर्दशीमार्गे – चतुर्दश्यामेव चतुर्थतप प्रभृति पाक्षिककृत्य मार्गे । एव च सति तत्प्रतिपक्ष -पूर्णिमापक्ष उन्मार्ग । मार्गोन्मार्गयोश्च परस्पर प्रतिपक्षरूपत्वादित्यक्षरार्थ । भावार्थस्तु सकथानक हारिभद्रीयवृत्तिनोऽवसातव्य । स च दिग्मात्रेण त्वेव-'सोवि सावओ अट्ठमिचउद्दसीसु उववास करेइ पोत्थय च वाएइ, तेवि तारवि कम्बलसम्बलनामानौ वृषभौ त सोऊण भद्दया जाया जम्मि दिवसे सावगो ण जेमेति त दिवस तेवि ण जेमति, तस्स सावगस्स भावो जाओ' त्ति श्रीहारिभद्र्यां । अत्र हि श्रीपार्श्वनाथतीर्थसम्बन्धिनो जिनदासश्रावकस्य चतुर्दश्या नियमे नोपवासकरणे चतुर्दश्यामेव पाक्षिककृत्यमनादिसिद्ध भणित, अर्थात् पूर्णिमापाक्षिककृत्याभ्युपगन्ता पूर्णिमापक्ष उन्मार्ग एवेति गाथार्थ ॥३१॥

अथोपोद्घातनिर्युक्त्यैव लौम्पकमत निराकर्तुं द्वारपरिनानाय उपोद्घातनियुक्तेर्विवेकमाह—

अह वीया वरवरिआ, णिग्गमदारस्स होइ णिज्जुत्ती ।
तीए वि दारगाहा, सभासिआ सा इमा होइ ॥३२॥

व्याख्या—अथेति पूर्ववत । द्वितीया वरवरिका 'वीर अरिट्ठणेमि' मित्यान्दिरूपा निर्गमद्वारस्य पड्विंशतिद्वारेषु तृतीयद्वारस्य निर्युक्तिर्भवति । तस्यामपि द्वितीयवरवरिकानिर्युक्तावपि या सभाष्यद्वारगाथा, सा इमा अनन्तरवक्ष्यमाणा भवतीति गाथार्थं ॥३२॥

अथोद्दिष्टा निर्गमद्वारान्तर्गता निर्युक्तिद्वारगाथामाह—

णिव्वाण चिइगागिइ, जिणस्स इक्खाग सेसगाण च ।
सकहा थूभ जिणहरे, जायग तेणाहिअग्गित्ति ॥३३॥

व्याख्या च हारिभद्रीयवृत्तितोऽवसातव्येति गाथार्थ ।३३।

अथ साम्प्रतमभिहितद्वारगाथाया द्वारद्वयव्याचिख्यासया मूलभाष्यगाथामाह—

थूभसय भाउआण, चउवीसं चेव जिणहर कासी ।
सव्वजिणाण पडिमा, वण्णपमाणेहिं णिअएहिं ॥३४॥

व्याख्या—स्तूपशत भ्रातृणा भरत कारितवानिति । तथा चतुर्विंशतिमेव जिनगृहे—जिनायतने, 'कासीति—कृतवान' का ? इत्याह सर्वजिनानां प्रतिमा वर्णप्रमाणैर्निजकैै आत्मीयैरित्यर्थ इति गाथार्थ ॥३४॥

एतच्च व्याख्यान हारिभद्रीयवृत्तिगतमवसातव्य ।

अथैतद् गाथाद्विकं लौम्पकमतमधिकृत्य कीदृग् भवतीति दर्शयितुं प्रथमं लौम्पकमतस्वरूपमाह-

**पडिमाराइअपक्खो, मुक्खाण होइ मच्छिआण व।**
**लूआलालाजालं, तणछिज्ज मणुअबालाण ॥३५॥**

व्याख्या—प्रतिमारातिपक्षः - जिनप्रतिमावैरीजनसमूहः, मूर्खाणां धर्माधर्मस्वरूप विरक्तविक्तानां, मक्षिकाणामिव लूतालालाजालं। यथा लूतालालाजालपतिता मक्षिका तत्रैव मृत्यु माप्नुवन्ति, तथा प्रतिमाऽरैवैरोजालपतिता मक्षिकाकल्पा मुग्धास्तत्रैवानन्तं संसारमाप्नो भवति। तदपि जालं तृणच्छेद्य तृणमात्रेण निवारणीयं, येषां ? मनुजबालानां दण्डान्तिग्राहका युवानो दूरे, मनुजबालकानामपि क्रीडागृहीततृणेनापि छेद्य भवति। एवं च सति प्रतिमाऽरातिपक्षोऽपि बहुश्रुता दूरे, अल्प श्रुतमात्रामपि सम्यग्दृशां तृणेनापि छेद्यो भवतीति गाथार्थः ॥३५॥

अथ तृणरूपं किं? इत्याह-

**तणरूप्पं पुण एअं, गाहदुगं अप्पबुद्धिमगहिअं।**
**लुंपगमउत्तजालं लीलाए तेण सुहछिज्ज ॥३६॥**

व्याख्या-तृणरूपं तृणसदृशं पुनरेतत् गाथाद्विकं 'निव्वाण' मित्याद्यनन्तरोक्तं अल्पबुद्धिमगृहीतं, तेन लौम्पकमतोक्तजालं लीलया सुखेन छेद्यं भवतीति गाथार्थः ॥३६॥

अथ लौम्पकविकल्पमिथ्यात्वस्यैव दूषयन्नाह-

**एअं अपमाणं ति अ, भाणत होइ इट्ठफलमिद्धि।**
**अरिहंताणवि पय, अपमाणतस्स किं सेसं ? ॥३७॥**

व्याख्या–एतद् गाथाद्विकमप्रमाण अस्माकं प्रमाण न भवतीति भाषमाणे लुम्पके इष्टफलसिद्धिरर्थादस्माक वाछित-फलसिद्धि । कारणमाह–'अरिहंताण पि' त्ति-णमो अरिहंताण-मित्यपि पदमप्रमाण भवेत्, किं शेष अनुयोगद्वारादि सर्वमपि श्रुत तस्य लौम्पकस्य। यस्य तु सर्वं श्रुतमप्रमाण, तेन सह श्रुतप्रमाणवादिना विवादोऽकिञ्चित्कर एव, प्रत्यक्षम्यादिक दर्शयितुमशक्यत्वात्। अय भाव –यदि लौम्पको भणति निर्युक्ति भाष्यादिकमस्माकमप्रमाण, तर्हि श्रुतमात्रस्याप्रामाण्ये सिद्ध श्रुतप्रमाणवादिना उक्तगाथाद्विकेनापि जिनप्रतिमाराधनसिद्धि अन्यथा तस्याप्रामाण्यासम्भवात्। यदि च भणति प्रमाण तर्हि तेनैव प्रतिमाराधनसिद्धिरित्युभयथापीष्टफलसिद्धिरिति गाथार्थ ॥

अथोक्तगाथाद्विकस्याप्रामाण्ये सिद्धे सर्व श्रुतमप्रमाण कथ भवति ? इत्याह––

गाहादुगपरिहारे, परिहारो होइ सुत्तमित्तस्स ।
ज णिज्जुत्तिजुत्तो, अणुओगो सुत्तमित्तस्स ॥३८॥

व्याख्या–गाथाद्विकपरिहारे–अनन्तरोक्तनिर्युक्ति - भाष्य गाथयो परिहारे सूत्रमात्रस्य परिहारो भवेत्। तत्र हेतुमाह–'ज णिज्जुत्ती'त्यादि। यस्मात् कारणात् सूत्रमात्रस्यानुयोगो व्याख्यान निर्युक्तियुक्तो भणित 'बीओ णिज्जुत्तिमीसओ भणिओ' त्ति वचनात्। निर्युक्तियुक्तव्याख्यानपरिहारे च व्याख्येय सूत्र सर्वमपि परिहृत भवेत्। व्याख्येयव्याख्यानयो रयो यानुविद्धत्वादिति गाथार्थ ॥३८॥

अथ निर्युक्तिरपि कीदृशी सूत्रानुयोगो भवेद् ? इत्याह—

अणुओगे माणुगमा, णिज्जुत्ति सेव सुत्तअणुओगे ।
अण्णहणुओगदारं, अपमाणं होइ वत्तव्वं ॥३९॥

व्याख्या—अनुयोगे पदैकदेशे पदसमुदायोपचारात् अनुयोगद्वारे सानुगमा सानुयोगा निर्युक्तिर्भणिता, सैव तथाभूतैव-सव्याख्यानैव सूत्रव्याख्यानं भवति, अन्यथा यदि सव्याख्याना सूत्रव्याख्यानं नोच्यते, तर्हि अनुयोगद्वारं अनुयोगद्वारसूत्रम प्रमाणं वक्तव्यं भवेत् । तत्र सूत्रनिर्युक्त्योरविशेषेण व्याख्यानयो भणितत्वात् ।

'से किं तं अणुगमे २ दुविहे प०तं० सुत्ताणुगमे णिज्जुत्ति अणुगमे'त्ति वचनादिति गाथार्थः ॥३९॥

अथातिदेशेन पराभिप्रायं दूषयन्नाह—

एएण णिज्जुत्ती, अपमाणं भासमाइपक्खेवा ।
इअ वयणं पक्खित्तं, भासाईण पमाणत्ता ॥४०॥

व्याख्या—एतेनान्तरोक्तयुक्तिप्रकारेण निर्युक्तिरस्माकं प्रमाणमेव, परं भाष्यादिप्रक्षेपादप्रमाणं गडुल्लितत्वादिति वचनं प्रक्षिप्तं निरस्तं, कुतो ? भाष्यादीनामपि प्रमाणत्वात् प्रमाणभूतभाष्यादिप्रक्षेपैर्निर्युक्तिरप्रमाणं न भवेदित्यर्थः ॥४०॥

अथ प्रमाणभूतेन सूत्रवाक्यान्तरेण युक्तं प्रमाणमपि यद्यप्रमाणं भवेत् तर्हि अतिप्रसङ्गेनेष्टापत्तिमाह—

अण्णह णंदिप्पमुहातिदेसवयणेहिं भगवई जुत्ता ।
अपमाणं वत्तव्वा, एवंपि समीहिअं अम्हं ॥४१॥

व्याख्या--अन्यथा प्रमाणभूतेन वाक्यादिना सयुक्ता निर्युक्तिर्यद्यप्रमाण भवेत्तर्हि भगवती अपि गम्य, भगवत्यप्य प्रमाणा वक्तव्या स्यात, तस्या अपि नन्दी जीवाभिगम प्रज्ञापना-सिद्धगण्डिकानामतिदेशवाक्यैर्युक्तत्वात्। तथाहि--'से किं त आयारो ? आयारेणं समणाण निग्गंथाण आयारगोअरो, एव अगा भाणियव्वा, जहा णंदीए जाव--

सुत्तत्थो खलु पढमो, बीओ णिज्जुत्तिमीसओ भणिओ।
तइओ अ णिरवसेसो, एस विही होइ अणुओगे ॥१॥

त्ति। भग० श० २५, उ० ३। तथा एव 'जहा जीवाभिगमे पढमो णेरइअउद्देसो णिरवसेसो भाणियव्वो' त्ति, भगवतीसूत्र शतक० ११, उ० ३। तथा 'णेरइआणं भंते ! केवइअ कालं ठिई पण्णत्ता, एव बीअठिइपद णिरवसेस भाणियव्व जाव अज हण्णे'त्यादि भ० श० ११, उ० ११। तथा उज्जुमइण भंते! अणंतपएसिए जहा णंदीए जाव भावओ इत्यादि। भग० श० ७, (८) उ० २ तथा प्रकरणस्याप्यतिदेशो, यथा 'जाव सिद्धगडिआ सम्मत्ता, कप्पाण पइट्ठाण बाहुल्लुच्चत्तमेव सठाणमित्यादि। भग० श० ९, (२) उ० ७। एतद्वृत्तौ च सिद्धगण्डिकासिद्धस्थानप्रतिपादनप्रकरणमित्यादि। एतेनाऽस्माक प्रकरणमप्रमाणमिति ब्रुवाणो लौम्पको निरस्तो बोध्य। भगवत्यामप्यतिदेशरूपेण प्रकरणसम्मतेर्दर्शितत्वात् प्रकरणा प्रमाणवादिनो लौम्पकस्य भगवत्या सुतरामेव परिहारार्हत्वात्। ननु भो ! भगवत्या यन्तिदेशरूपण नन्दीप्रभृतिक भणित, तत्

गणधरकृत साम्प्रत व्युच्छिन्नत, यच्च विद्यमान तत्ततोऽन्यदेवेति चेत्। सत्य, तर्हि निर्युक्तावपि भाष्यान्ति तथैवाभ्युपगन्तव्य, उभयत्रापि युक्तेस्तौल्यात्। अत एव निर्युक्तौ मूलभाष्यगाथा इत्यादि भणितमपि। तथा 'सत्त पवयणणिण्हगा प०त०–बहुरया १ जीवपएसिआ २ अव्वत्तिआ ३ सामुच्छेइया ४ दोकिरिया ५ तेरासिया ६ अबद्धिआ ७ इत्याद्यधिकारो गोष्ठामाहिलोत्पत्ते पश्चादेव प्रक्षिप्त। यदि च श्रीसुधर्मस्वामिना गोष्ठामाहिलो निह्नवत्वेन श्रीस्थानाङ्गे भणितोऽभविष्यत्, तर्हि गोष्ठामाहिलो भणति सत्य, उत दुर्बलिकापुष्पप्रमुख श्रीमघो भणति तत् सत्य-मिति निर्णयार्थं तीर्थङ्करसमीप शासनदेवताया प्रेषण नाऽभवि-ष्यत्। निह्नवत्वेन श्रीमहावीरोक्तो गोष्ठामाहिलोऽसत्यवादीति निश्चयात्। किञ्चास्तामयत्, गोष्ठामाहिलस्य दीक्षादिक-मपि नाऽभविष्यत्। एव जमालिप्रभृतय शेषनिह्नवा अपि नाम-ग्राहेण प्ररूपणया वा सूत्रेऽनुक्ता एवावसातव्या। एव प्ररूप-णाकारी अमुकनामा साधुर्निह्नवो भविष्यतीति। सूत्रोक्ताकल्प्य-वस्तुविषयप्रवृत्तिरागम व्यवहारिणोऽपि न भवति 'णो इम सा वज्जति पण्णवेत्ता पडिसेवित्ता (ण) भवती'ति वचनात्। नहि श्रुतव्यवहारि निषिद्ध कृत्य केवल्यपि करोति, श्रुतव्यवहारस्य के-वलिनोप्यभिमतत्वात्। यच्च श्रुते आगमव्यवहारिणो बलवत्त्व, तत्सामान्योक्तविध्युल्लङ्घनेन विशिष्टाचारस्य निश्चयादवसात व्यम्। तच्च श्रुतव्यवहारनिषिद्ध न भवति, प(व)ल्वत्तया निषिद्ध-कर्तव्यस्य तत्रासम्भवात्। यथा श्रीस्थूलभद्रस्य कोशागृहे

चतुर्मासकावस्थान। तस्मात् सर्वस्यापि श्रुतस्य प्रायो यथा-सम्भव प्रक्षेपोद्धारसम्बन्धपरावृत्त्यादिकमर्यादाकारक प्राय चर मश्रुतधर एव भवति, तस्यैव तथाप्रवृत्तावधिकारात्। तेन तथाभूत सम्प्रति श्रीवज्रनाम्येवेति। वृद्धसम्प्रदायोऽपि सम्यगेव। प्रायोग्रहणात् क्वचित् कदाचित् युगप्रधान युगप्रधानश्रुतधरो वाऽपि सम्भवति, तत्कृतस्यापि तीर्थसम्मतत्वात्। यथा सभाप्रबन्धेन श्रीकल्पसूत्रवाचना। अन्यथा एकादशाङ्ग-धारिणा मेघकुमार-स्कन्धक-जमालिप्रभृतीना अङ्गादिषु अविद्य मानानामपि व्यतिकरा सूत्रे केन प्रक्षिप्ता सर्वसम्मता जाता? इति पर्यालोचनम्। यत्तु निर्युक्तिभाष्यचूर्ण्यादीनामाधुनिकत्वेन भणन, तत्कालानुभावात् अवशिष्टाना प्राचीनानामेव सक्षिप्तार्थपाठपरावृत्त्यादिना वृत्तेरिवावसातव्य। प्राचीनत्व च पूर्वाचार्यसम्मत्या श्रीमहानिशीथादर्शे लिखित प्राग् प्रदर्शितमेव। तेन निर्युक्तिभाष्यचूर्ण्याद्यनागीकारे अर्थप्रत्यनीकताऽपि। यदागम— 'सुअ पडुच्च तओ पडिणीआ प० त० सुत्तपडिणीए १ अत्थपडिणीए २ तदुभयपडिणीए' ३ त्ति। श्रीस्थानांगे। वृत्तिर्यथा—सूत्र-व्याख्येय, अर्थस्तद्व्याख्यान निर्युक्त्यादि, तदुभय च द्वितयमिति। तस्मात् प्रक्षेपमात्रेण प्रमाण सदप्रमाण न भवत्येव, प्रत्युताऽनुकूलप्रक्षेपस्य सूत्र याख्यानभूतत्वेन मूलस्य दार्ढ्यहेतुत्वात्। तेन प्रमाणस्य सूत्रादेरप्रामाण्य तावत्प्रमाणप्रक्षेपण एव स्यात्। अप्रमाणप्रक्षेपस्तु तीर्थाभिमतसूत्रनिर्युक्त्यादौ क्वापि न सम्भवति विरोधात्। यदि चागमविपरीतप्रक्षेपोऽपि तीर्थसम्मतो

भवेत्तर्हि दिगम्बरादिमार्गा अपि तीर्थवृत्त्या न भवेयु, आगम विरुद्धप्रभृतेरपि तीर्थसम्मतत्वात्। तस्मात् प्रक्षेपमात्रेण यदि निर्युक्ते परिहारस्तर्हि भगवत्पादे पुनरामत्र परिहार कर्तव्य, तत्रापि प्रक्षेपस्य प्राग् प्रदर्शितत्वात्। यदि च सत्यपि प्रक्षेपे भगवत्याद्यङ्गीकारस्तर्हि निर्युक्त्यादेरपीति, उभयथापि साम्यात्। एव उभयथाप्यस्माक समीहित सम्पन्नमित्यत्राहार्यमिति लौम्प केन सह विवादस्य पर्यवसानादिति गाथार्थ ॥ ४१ ॥

अथैवमुक्तप्रकारेण सूत्रेऽपि प्रासादप्रतिमादीना कारापकादे सुलभत्वेऽपि श्रद्धानकारणमाह—

तेण अणुओगजुत्ते, सुत्ते पडिमाणकारगप्पमुहा ।
सुलहा सद्दहण पुण, दसणमोहस्स खओवसमे ॥ ४२ ॥

व्याख्या—येन कारणेन प्रकृतसूत्रानुरूपग्रन्थान्तरवचनेन मिश्रित प्रमाण सदप्रमाण न भवति, तेन कारणेनानुयोगयुक्ते सानुयोगनिर्युक्तियुक्ते प्रसगानुप्रसगागतानुयोगयुक्ते च सूत्रे 'णमो अरिहताण' मितिपदमात्रलक्षणे प्रतिमाकारकप्रमुखा – प्रतिमा प्रासाद प्रतिष्ठाकारककारापकप्रमुखा सुलभा —सुख लभ्या । तथाहि—साधारणप्रासादप्रतिमादीनां कारापणादौ मुख्यवृत्त्याधिकार चक्रवर्त्यादिसम्यग्दृशां राज्ञामेवेति पञ्चाशकादौ भणित, तत्कारितानां च प्रासादादीना मात्सर्यादिदोषराहित्येन सर्वसम्मतत्वेन चोपादेयत्वात्। तेनास्यामवसर्पिण्यां प्रतिमादिकारापक प्रथम सम्यग्दृष्टी राजा भरतचक्रवर्ती। तेन कारितमष्टापदादौ जिनभवनादिकम्। तचोपोद्घात-

निर्युक्तिव्याख्यानभूतया 'थूमसय भाउआण' मित्यादिभाष्य-गाथया प्रागुपदर्शितमेव। परमुक्तप्रकारेण श्रद्धानं पुनर्दर्शन मोहनीयस्य क्षयोपशमे, उपलक्षणात् ज्ञानावरणीयक्षयोपशमसह कृते सत्येव स्यात्। उभयोरपि सहकार्यसहकारिभावसम्बन्धेन कारणत्वादिति गाथार्थ ॥ ४२ ॥

अथोक्तार्थसंवादनार्थं नमस्कारनिर्युक्तिगतां गाथामाह—

णाणावरणिज्जस्स उ, दंसणमोहस्स तह खओवसमे।
जीवमजीवे अट्ठसु, भंगेसु अ होइ सव्वत्थ ॥ ४३ ॥

व्याख्या—जीवाजीवानधिकृत्य अष्टसु भङ्गेषु श्रद्धानं तु ज्ञानावरणीयस्य दर्शनमोहनीयस्य च क्षयोपशमे सत्येव सर्वत्र भवति। ते चाष्टौ भङ्गा अमी—एक साधु १ एका प्रतिमा २ बहव साधव ३ बह्व्य प्रतिमा ४ एक साधुरेका प्रतिमा ५ एक साधुर्बह्व्य प्रतिमा ६ बहव साधव एका प्रतिमा ७ बहव साधव बह्व्य प्रतिमा ८ इति। सर्वत्रापि श्रद्धानं सम्यग्दृशामेव भवति। तस्यैव (तेषामेव) तयो कर्मणोस्तथैव क्षयोपशमात्। तत्र केवलसूत्रार्थलक्षण प्रथमोऽनुयोग 'नमोऽर्हद्भ्य इत्यत्रार्हन्ति शक्रादिकृतां पूजामित्यर्हन्तस्तेभ्य इति शब्दव्युत्पत्त्यैवावसातव्य। तदनुकूला निर्युक्तिर्यथा—

'अरिहंति वंदणनमंसणाइ, अरिहंति पूअसक्कारं।
सिद्धिगमणं च अरिहा, अरिहंता तेण वुच्चंति' ॥१॥चि।

तथा 'अरिहंतृभ्य' इत्यत्र अरीन् घ्नन्तीति अरिहंतारस्तेभ्योऽरिहन्तृभ्योऽस्य के ? इतिप्रश्ने निर्युक्तिर्यथा—

'अट्ठविहंपि अ कम्म, अरिभूअ होइ सव्वजीवाण ।
त कम्ममरिहता, अरिहता तेण वुच्चति' ॥ १ ॥

तत्राष्टविधान्यपि कर्माणि जीवेन निबद्धान्येव भवन्ति । निबन्धस्तु कार्यत्वेन कारणायत्त इति प्रसगागतानि कर्मबन्धकारणान्यपि वक्तव्यानि । तत्र ज्ञानावरणीयदर्शनावरणीयकर्मबन्धकारणानि यथा--

'पडिणीअ अन्तराओ उवघायए तप्पओसणिण्हवणे ।
आवरणदुग भूओ, बधइ अच्चासणाए अ' ॥ १ ॥ त्ति ।

तथा दर्शनमोहनीयकर्मबन्धकारणानि यथा–

अरिहतसिद्धचेइअ तवसुअगुरुसघसाहुपडिणीओ ।
बधइ दसणमोह, अणतससारिओ जेण ॥ १ ॥ त्ति श्री-आचारागवृत्तौ सम्मतितया भाष्यकारवचन । तथा उपोद्घात निर्युक्तिव्याख्यानभूताया 'थूभसय भाउआण' इत्यादिभाष्य-गाथाया जिनप्रतिमा भणिता । ताश्च प्रतिष्ठिता एव पूज्या भवन्तीति प्रसगागत प्रतिष्ठाकारकश्रीरामसूरिव्यतिकरनिबद्ध श्रीशत्रुञ्जयमाहात्म्य वक्तव्य। तच्च श्रीपुण्डरीकगणधरकृत सपाद लक्षप्रमाणमासीत् । साम्प्रत च क्रमेण तदुद्धाररूपमवसातव्यम् । जिनप्रतिमाप्रतिष्ठा च केन विधिना भवतीत्यनुप्रसङ्गागत श्री हरिभद्रसूरि - पादलिप्ताऽऽचार्यामास्वातिवाचकप्रमृतिविरचिता प्रतिष्ठाकल्पा अपि वक्तव्या । एव च सति 'णमो अरिहताण' मिति पदमात्रस्य 'सुत्तत्थो खलु पढमो' इत्यादिगाथोक्तैस्त्रिभि प्रकारैर्व्याख्यानकरणे निर्युक्ति भाष्य चूर्णि चरित्रादिक

स्ववश्य वक्तव्यमेव । अन्यथा 'णमो अरिहंताण' मिति पदस्य व्याख्यानासम्भवात । अव्याख्यात च सूत्र मुसकरूपमेव भवति। यदागम –'सुअधम्मे तिविहे प० त०–सुत्तसुअधम्मे १ अथसुअधम्मे २ तदुभयसुअधम्मे ३' त्ति श्री स्थानांगे । वृत्तिर्यथा– 'सूयते सूच्यते वाऽर्थोऽनेनेति सूत्र, सुस्थितत्वेन व्यापित्वेन च सुष्ठूक्तत्वात्सूक्त, अव्याख्यानेन अप्रतिबुद्धावस्थत्वात्सुप्त इव सुप्तम्। न चैव 'सुत्त' ति पदस्य त्रिधा निर्वचनकरणमनुचित मिति वाच्य । एकस्यापि पदस्य प्रवचनाऽनाबाधयाऽनेकार्थाभिधायकत्वात् । अत्र वृद्धसवादेन दृष्टान्तोऽपि––

'भिक्खुस्स तिन्नि भज्जा, एगा मग्गेइ पाणिअ देहि ।
बीआ मग्गइ हरिण, तइआ गवरावए गीअ' ॥१॥ ति ।

तिसृभिर्भार्याभिर्याचितो भिक्षु 'सरो णत्थि'त्ति एकेनैव वाक्येन सर्वासामपि निर्वचन कृतवान् । अत्र प्राकृतनिष्पत्त्या एकत्वेऽपि सरो नास्ति१ सरो नास्ति२ स्वरो नास्तीति त्रिविध भेदेन नानार्थत्वात् । एवमेकमेव सुत्तति पद वृत्तिकारेणागमा नाबाधया त्रिधापि व्याख्यात। त्रयाणामप्यर्थाना प्रवचनाऽनाबाधकत्वात् । अन्यथा महार्थता सर्वतोमुखत्वाद्यभावेन सूत्रमेव न स्यात्। अत एव एकमेव सूत्र द्रव्यानुयोगादिभिश्चतुर्भिरनुयोगैर्व्याख्यायमानमासीत्। तस्माण्णमो अरिहंताणमिति पदस्य निर्युक्तिमणितेषु अष्टसु भङ्गेषु श्रद्धान ज्ञानावरणीय दर्शनमोहनीयक्षयोपशमे सत्येव, नान्यथेति तात्पर्यमिति गाथार्थ ॥४३॥

अथ प्रतिमाऽरातिसमुदायस्य ज्ञानावरणीयदर्शनमोहनीययो कर्मणो क्षयोपशमाऽभावेन यत्स्यात्तदाह—

**तयभावा सद्दहण, ण होइ तेणेव तस्स मिच्छत्त ।**
**मिच्छत्ता जिणपडिमा पडिवक्खो जाव तित्थस्स ॥ ४४ ॥**

व्याख्या–तदभावादुक्तलक्षणकर्मणो क्षयोपशमाऽभावेन श्रद्धानमथाज्जिनप्रतिमाविषयं न भवति। तेनैव तस्य मिथ्यात्व। मिथ्यात्वाच्च जिनप्रतिमाया प्रतिपक्षो–वैरी भवति। न केवल जिनप्रतिमाया एव, यावत् तीर्थस्यापि, यावत्करणात्तीर्थकरादर्म्रहण, तीर्थ तीर्थकर जिनप्रतिमादीनामन्योन्यानुविद्धत्वेन सम्भवात्। अन्योन्यानुविद्धत्व चाऽऽराधनमधिकृत्य परम्परमविनाभाविनेनावसातव्यम्। अत एव तीर्थप्रतिपक्षस्य तीर्थकरप्रतिपक्षत्वम्याऽऽराधकत्वात्, तीर्थम्य तीर्थकरपूज्यत्वात्। यदागम —

तित्थपणाम काउ, कहेइ साहारणेण सद्देण ।
सव्वेसिं सण्णीण, जोअणणीहारिणा भयवं ॥१॥
तप्पुव्विआ अरिहया, पूइयपूया य विणयकम्म च ।
कयकिच्चो वि जह कह, कहेइ णमइ तहा तित्थ ॥॥ ति

**श्री आवश्यकनिर्युक्तौ** । तीर्थम्य तीर्थकरपूज्यत्व च सर्वगुणाश्रयत्वेनैव । यदुक्त—

'एअमि पूइयमि, णत्थि तय ज न पूइय होइ ।
भुवणेवि पूयणिज्ज, ण गुणट्ठाण तओ अन्नं' ॥१॥ ति

पञ्चाशके। एतेन वय तीर्थकर तु मन्यामहे, तीर्थेन किं प्रयोजनमिति नितमतिकल्पनया धाष्ट्र्यमाश्रिता अपि निरस्ता बोध्या ।

तीर्थानभ्युपगमे तीर्थंकरस्याप्यनभ्युपगमात् । नहि पुत्रानभ्युपगमे तज्जनकत्वेन पितृत्वाभ्युपगम सम्भवति । पुत्रेणैव पितृत्वव्यपदेशस्य जायमानत्वात् । एव च यथा जातेन पुत्रेण देवदत्तस्य पितृत्वपदवी दत्ता, तथा जिनेन व्यवस्थापितेन तीर्थेन जिनस्य तीर्थंकरपदवी दत्ता । अत एव कृतकृत्योऽपि भगवान् जिनस्तीर्थं नमस्करोति । यदागम —'तित्थपणाम काउ' मित्यादि गाथायुग्म अनन्तरप्रदर्शित बोध्यम् । किञ्च तीर्थानभ्युपगमे तीर्थंकरस्याप्यनभ्युपगम एवेत्यत्र युक्ति 'एएण सव्वेसिं एगो तित्थकरो'त्ति गाथाव्याख्याया वक्ष्याम इति गाथार्थ ।४४।

अथ प्रतिमाऽरेस्तीर्थप्रतिपक्षत्वसूचक वचनमाह—

तेण तित्थमतित्थ, अतित्थमवि भासइ सुतित्थति ।
तमसच्च जगपावा, अहिअ पाव जिणिंदुत्त ॥४५॥

व्याख्या—येन कारणेन लौम्पकस्तीर्थप्रतिपक्ष, तेन कारणेन श्रीमहावीरव्यवस्थापितमच्छिन्नपरम्परागत ( तीर्थं ) यत्तदोरध्याहारात् यत्तदतीर्थं-तीर्थं न भवतीत्येव तीर्थस्यातीर्थतया भणन, अतीर्थमपि जिनप्रतिमारिसमुदायात्मक, सुतीर्थ-शोभन तीर्थमिति भाषते, एवमनृतमसत्यभाषण जगत्पापादधिक पाप-कारण कार्योपचारात् अधिकपापकारण 'जिणिंदुत्त' जिनेन्द्रेणोक्तम् । तथाहि—'उम्मग्गमग्गसपट्ठियाण साहूण गोयमा ! णूण । ससारो अ अणतो, होइ अ सम्मग्ग णासीण' ॥१॥ [ गच्छाचार ] ति वक्ष्यमाणमवसातत्त्वं यथा—

एकत्राऽसत्यज पाप, पाप नि शेषमेस्त ।

द्वयोस्तुलायधृतयो-रायमेवातिरिच्यते ॥१॥ इति योगशास्त्रवृत्तौ । एव तीर्थमतीर्थमतीर्थं च तीर्थमिति भाषण सर्वोत्कृष्टमृषाभाषण तीर्थप्रतिपन्थत्वाभिव्यञ्जकम् । एव सर्वेऽप्युत्सूत्र भाषिणस्तीर्थप्रतिपक्षा एव इत्यग्रे वक्ष्यते इति गाथार्थ ॥४५॥

अथोक्तप्रकारेण मृषाभाषणस्य मूलकारणमाह--

जेण जिणत्तणेण, णिअणाममिगप्पिअ सतुद्धीए ।

त सच्चति कयट्ठा, तित्थमतित्थ महामोहा ॥४६॥

व्याख्या--येन कारणेन स्वबुद्धया-वय जैना इत्येवरूपण जैनत्वेन निजनाम कल्पित तन्नाम सत्यमिति कृत्यर्थ-करणार्थं तीर्थमतीर्थत्वेनातीर्थं च तीर्थत्वेन भाषण महामोहात्-उत्कृष्ट मिथ्यात्वमोहनीयोदयादवसातव्यम् । अय भाव -जैनानां मते उत्सूत्रभाषिणो मिथ्यादृष्टित्वेन प्रवचनबाह्या । तेन ते न जैना, नान्यतीर्थिका वा, हरिहरादीनां देवत्वेनाऽनभ्युपगमात । नापि गृहस्था, यतिलिङ्गधारित्वात् । अपि तु व्यक्तनाम्ना वक्तुम शक्यत्वात् अव्यक्ता । यदि च मिथ्यादृष्टित्वेऽपि जैना भवन्ति, तर्हि जैना सम्यग्दृशो मिथ्यादृशश्चेति द्वैविध्येन वक्तव्या स्यु । तच्चाद्य यावत्केनापि नोक्त, न वा श्रुत, उत्सूत्र भाषिणो मिथ्यादृष्टित्व च वचोमात्रेण सर्वसम्मतम् । तेन यदि आत्मान जैनत्वेन नाऽभणिष्यत्, तर्हि ते जैनमजैनत्वेनाजैनं च जैनत्वेन नाऽभणिष्यन्, प्रयोजनाभावात्, यथा सौगतादय । प्रयोजन चात्मनो जैनत्वेन सिद्धिरेव । जैनत्व च तीर्थान्तर

वर्तित्वेनैव स्यात्, जिनस्यापत्य जैन इति शब्दव्युत्पत्ते। तीर्थान्तरवर्तित्व च जिनसमुदायस्य तीर्थत्वेनैव स्यात्। तच्च निजमार्गप्रतिपक्षभूतस्य तीर्थस्यातीर्थतया भणनेनैव स्यात्, निरुद्धयोर्द्वयोस्तीर्थयोरसम्भवात्। ननु भो! जिनस्यापत्यत्वाऽभावेऽपि जिनो देवोऽस्येति जैन इति शब्दव्युत्पत्त्या सम्यग्दृष्टि देवादीनामिव जैनत्व भवत्वेवेति चेत्। सत्य, तीर्थप्रतिपक्षभूत मार्गमाश्रिताना तीर्थव्यवस्थापकस्य जिनस्य देवत्वेन श्रद्धानमेव (न) भवति, तीर्थविरोधस्य तीर्थकरविरोधनियतत्वात्। जिनस्य कर्तव्ये वचसि च विश्वासाभावात जिनस्य मृषाभाषित्वाद्यभ्युपगमे वचोमात्रेण तीर्थकराभ्युपगम स्वात्मन तद्वचो श्रोतृणा च महानर्थहेतुरमार्गप्रवृत्तिहेतुत्वात्। किञ्च नत्लमपुनर्घातकेन सह मैत्री किं केनाऽपि कस्यापि दृष्टा श्रुता वा? । न चैव सम्यग्दृष्टिदेवादीना सम्भवति, तीर्थेन सह विरोधाभावात। तीर्थविरोधित्व चाग्रे वक्ष्यते इति गाथार्थ ॥४६॥

अथोक्तप्रकारेण मृषाभाषण मिथ्यात्वोदयादेव स्यात्, तेन सामान्यतो मिथ्यात्वस्वरूप किञ्चिदाह—

मिच्छत्ता विवरीअ, सव्वो लोओ वइज्ज सव्वपि।
जइ कत्थवि सम्म त, घुणअक्खरणायओ णेअ ॥४७॥

व्याख्या—मिथ्यात्वात् सर्वो लोको विपरीत वदेत् सम्यग् वस्तुस्वरूप न भाषते। तुरध्याहार्य, स तु कुत्रचित् सम्यग सत्य भाषते, तत् घुणाक्षरन्यायत। यदागम —

'सम्मद्दिट्ठीउ सुअमि, अणुवउत्तो अहेउअं चेव ।
जं भासइ सा मोसा मिच्छादिट्ठीवि अ तहेव' ॥१॥ त्ति दशवै० नि०। एतद्गाथावृत्तौ–'मिथ्यादृष्टिरपि तथैव-उपयुक्तोऽनुपयुक्तो वा यद् भाषते, सा मृषैव। घुणाक्षरन्यायेन क्वचित् संवादेऽपि 'सदसतोरविशेषात् यदृच्छोपलब्धेरुन्मत्तवदि'-ति। तस्मात् मिथ्यादृष्टिः सर्वत्र विपरीतभाषीति गाथार्थः ।४७।

अथ मिथ्यात्ववत् तत्प्रतिपक्षभूतस्य सम्यक्त्वस्य स्वरूप-भणनपूर्वकं सामान्यतो मिथ्यात्वनिर्णेकमाह–

**णिज्जुत्ती अणुओगो, जस्स पमाणं खु तस्स सम्मत्तं ।
सेसाणं मिच्छत्तं, आगाढं वा अणागाढं ॥ ४८ ॥**

व्याख्या– निर्युक्तेरनुगमो भाष्यादिस्वरूपं व्याख्यानं, सूत्रव्याख्यानभूताया अपि निर्युक्तेरनुगमस्य प्रवचने भणितत्वात्। तथाहि–'से किं तं अणुगमे ? २ दुविहे प० तं० सुत्ताणुगमे १ णिज्जुत्तिअणुगमे २' त्ति श्री अनुयोगद्वारे। सोऽनुयोगो यस्य प्रमाणं स यतयाङ्गीकारं, तस्य सम्यक्त्वं भवति। निर्युक्त्यनुगमस्य भाष्यचूर्ण्यादिरूपस्य प्रामाण्याभ्युपगमे जन प्रवचनमात्रमपि प्रमाणतयाभ्युपगतं भवेत्, उभयपदाव्याहत्यैव व्याप्ते। एवं च तस्य सम्यक्त्वं भवत्येव। यदुक्तं––

'सत्ताइं निणेसरभासिआइं, वयणाइं णण्णहा हुंति।
इअ बुद्धी जस्स मणे, सम्मत्तं निच्चलं तस्स' ॥ १ ॥ त्ति।

जिनोक्तस्यैकस्याप्यक्षरस्याश्रद्धाने मिथ्यात्वं पुरो वक्ष्यते। शेषाणां तु र्गम्य, शेषाणां तु मिथ्यात्वं स्वरवधारणे, मिथ्या-

स्वमेव । तत्र मि यात्व द्वेधा आगाढ–तीव्र, वा अथवा, अनागाढ मन्द, वा विकल्पार्थे भवतीति सामान्यतो विभागो दर्शित इति गाथार्थ ॥ ४८ ॥

अथ प्रथमतया भणितस्याऽऽगाढमिथ्यात्वस्य विभागमाह–

**आगाढ पुण लोइअ–लोउत्तर भेअओ अ दुविगप्प ।**
**तेसिममग्गहदोसा, दोसो णिअमा अ जिणसमए ॥४६॥**

व्याख्या–आगाढ पुनर्मिथ्यात्व लौकिकलोकोत्तरभेदतो द्विविकल्प द्विप्रकार, भवति । 'तेसिं' ति धर्मधर्मिणो कथञ्चिदभेदात् तद्वतामागाढमिथ्यादृशामसद्ग्रहदोषात्–निज निज गुरूपदेशपरतन्त्रविचारविलक्षणासद्ग्रहदोषमाहात्म्यात् जिन समये जैनशासने, नियमात्–निश्चयेन द्वेषो भवति । यदागम – —'से एगइओ समण वा माहण वा दिस्सा णाणाविहेहिं पावकम्मेहिं अत्ताण उवक्खाइत्ता भवति, अदुवा ण अच्छराए आप्फालेत्ता भवति, अहवा फरुस वइत्ता भवतीत्यादि, यावत् अहम्मपक्खस्स विभगे एवमाहिए' त्ति सूत्र कृ० द्वि० श्रु० (सू० ३२) वृत्तिर्यथा 'साम्प्रत विपर्यस्तदृष्टय आगाढ मिथ्यादृष्टयोऽभिधीयन्ते 'से एगइओ' इत्यादि । व्याख्या-'अथैकक कश्चित् आभिग्रहिकमिथ्यादृष्टिरभद्रक साधुप्रत्यनीक तया श्रमणादीना निर्गच्छता प्रविशता वा स्वय निर्गच्छन् प्रविशन् वा नानाविधै पापोपादानभूतै कर्मभि आत्मानमु पख्यापयिता भवतीत्येतद्देव दर्शयति अथवेत्ययमुत्तरापेक्षया पक्षान्तरग्रहणार्थं, क्वचित् साधुदर्शने सति मिथ्यात्वोपहतदृष्टि-

तया अपशकुनोऽयमित्येवं मन्यमानः सन् दृष्टिपथादपसारयन् परुषं वचो ब्रूयात् तद्यथा–ओदनमुण्ड! निरर्थककायक्लेशपरायण! दुर्बुद्धे! अपसराऽग्रत, तदसौ भ्रुकुटिं विदध्यात् असभ्यं वा ब्रूयादित्यादि यावदिदमुक्तं भवति–यो हि क्रूरकर्मकारी साधुनिन्दापरायणः तद्दाननिषेधकः स दक्षिणगामुको भवति—दाक्षिणात्येषु नरकतिर्यग्मनुष्यामरेषु उत्पद्यते। तादृग्भूतश्चायमतो दक्षिणगामुक इत्युक्त' मित्यादि। एवं जिनप्रवचने प्रतीतोऽभिनिवेशिनाम्ना हि लोकोत्तराऽऽगाढमिथ्यादृष्टिः मन्तव्यः। नवरं जैनं मार्गं जैनाऽऽभासमार्गत्वेन, जैनाभासमार्गं च जैनमार्गत्वेन ब्रुवाणो जैनमार्गविध्वंसकः सन् साध्वादीनां सर्वेषामपि प्रत्यनीको मन्तव्यः। जैनमार्गविध्वंसकत्वं चोत्सूत्रभाषकस्यैव स्यात्। यदागमः–

अहो अ राओ अ समुट्ठिएहिं, तहागएहिं पडिलब्भ धम्मं।

समाहिमाघातमजोसयंता, सत्थारमेवं फरुसं वयंति॥१॥

त्ति श्रीसूत्रकृदङ्गे (अ०१३, गा०२) वृत्तिर्यथा–'अहो अ राओ अ समुट्ठिएहिं'मित्यादि। व्याख्या–अहोरात्र-अहर्निशं, सम्यगुत्थिताः–सदनुष्ठानवन्तः तेभ्यः श्रुतधरेभ्यः तथागतेभ्यो वा तीर्थकृद्भ्यो धर्मं-श्रुतचारित्राख्यं प्रतिलभ्य-संसारनिस्तरणोपायं धर्ममवाप्यापि कर्मोदयात् मन्दभाग्यतया जमालिप्रभृतय इवात्मोत्कर्षात् तीर्थकृदाख्यातं समाधिं–सम्यग्दर्शनादिकं मोक्षपद्धतिमजोषयन्तोऽसेवयन्तः–सम्यगकुर्वाणा निह्नवा बोटिकाश्च स्वरुचिविरचितव्याख्याप्रकारेण निरूपि सर्वज्ञप्रणीतमार्गं विध्व-

सयन्ति, कुमार्गं च प्रवेदयन्ति, ब्रुवते च—असौ सर्वो एव न भवति, य न्नियमाण कृतमित्यध्यक्षबाधित प्ररूपयति। तथा च पात्रादिपरिग्रहात् मोक्षमार्गमभिभावयतीत्यादि। एव साम्प्रतीना अपि यश्चतुर्दश्या पाक्षिक कृत्य, स्त्रीजिनपूजा, श्राद्धानां मुखवस्त्रिकादिक यावत्पृथिव्याद्युपमर्दस्थान जिनप्रतिमापूजादिक च प्ररूपयति, स सर्वो एव न भवतीति ब्रुवाणा प्रवचननिन्हसका एव मन्तव्या इति गाथार्थ ॥ ४९ ॥

अथाऽऽगाढमिथ्यादृशा मार्गकृत्य दूरे, मार्गानुयायि कृत्यमपि ( न ) भवतीति दर्शयति—

**तुल्लाहिं किरियाहिं, ण होइ मग्गाणुसारि किच्चपि।**
**उप्पहपहकिरिआण, तुल्लाणवि अतर गुरुअ ॥ ५० ॥**

व्याख्या—तुल्या—सम्यगदृग्मिथ्यादृगभ्या विधीयमानत्वेन समा, क्रिया—तप सयमादिलक्षणा, ताभि क्रियाभिरागाढमिथ्यादृशां मार्गानुयायि कृत्यमपि न भवति। तत्र दृष्टान्तमाह—'उप्पहे'त्यादि। उपथ निगमिपितनगर प्रत्युन्मार्ग, पथा च मार्ग, उपथ च प था चोत्पथपथानौ, तयो क्रिया—समीहितनगरप्राप्तिनिमित्तगमनादिरूपा पादादिगमनाऽऽनभोजनपानीयपानस्नान सुस्थानविश्राम श्रमापनयनादिरूपा, तासा तुल्यानामपि परम्परमन्तर गुरुक—महद् भवति। तच्चैव—याभि क्रियाभि प्रेप्सितनगरस्य प्रत्यासन्नतादिभवनानुक्रमेण नगरप्राप्ति भवति, ताभिरेव क्रियाभिरमार्गगामिना प्रेप्सितनगरात् दूर-दूरतरभवनादिक्रमेण नगरासन्नासिरेव स्यात्। एतच्च सर्वानु

भवसिद्धमेव । एव जिनमार्गाश्रितानाम न्यतीर्थिकमार्गमाश्रितानामुत्सूत्रमपिमार्गमाश्रितानां चाशन कथञ्चित् साम्येऽपि महदन्तरमवसातव्यम् । अय भाव –जैनदर्शन तावत् मोक्षमार्गत्वेन मार्ग, शेषाणि तु सौगत-कापिलेयादिदर्शनानि जमाल्यादिदर्शनानि च समारमार्गत्वेनोन्मार्गा । यदागम —

'दुप्पवयणपासंडी, सव्वे उम्मग्गपट्ठिआ ।

सम्मग्गं तु जिणक्खाय, एस मग्गो हि उत्तमे' ॥१॥ त्ति श्री उत्तरा० २३ (गा० ६३) तत्र यद्यपि दिग्वैपरीत्येन सर्वासामपि क्रियाणा वैपरीत्य भवति, अन्यथा विपरीतकार्याऽसम्भवात्, तथापि कथञ्चित् परिहारोपादानाभिधानादिना साम्य सम्भवति । पर तन्मार्गानुयायि कृत्य न भवयेत्, मुक्तिपथाभावात् । यत सम्यग्ज्ञानादेर्मुक्तिपथत्व 'सम्यग्दर्शनज्ञान चारित्राणि मोक्षमार्ग, (तत्त्वार्थ०) इति वचनात । अत एव यावत् राज्यादिपरित्यागोऽपि यथा सम्यग्दृशां मुक्तिकारण न तथा मिथ्यादृशामपि । प्रत्युत महानर्थहेतुरेव । यदुक्त–

'बाह्यग्रन्थ(परि)त्यागान्न चार नत्र तदितरस्यापि ।

कञ्चुकमात्र(परि)त्यागा न्नहि भुजगो निर्विषो भवति' ॥१॥ इति षोडशके । वृत्तिर्यथा–'ननु बाह्यलिङ्गस्य कथमप्राधान्य भवद्भिरुच्यते? यतस्तत्परित्यागरूपमि याशङ्क्याह–बाह्यग्रन्थ० व्याख्या–बाह्यग्रन्थत्यागात्— धनधान्यस्वजनवस्त्रादित्यागान्न चार–न शोभन बाह्यलिङ्गम् । ननु निश्चितमतत् अत्र लोके, तद् बाह्यलिङ्ग इतरस्यापि मनुष्यतिर्यग्प्रभृतेरपि सम्भवति, एन

मेवार्थं प्रतिरस्तूपमया दृढायति—कञ्चुकमात्रपरित्यागात्—उपरिवर्तित्वङ्मात्रपरित्यागात्, नहि नैव, भुजग—सरीसृप, क्वचि निर्विषो भवतीति। आस्तामन्यत्, मिथ्यादृशां ज्ञानमप्यज्ञान, एवं स्वाभिमतदेवाद्याराधनशुभाध्यवसायोऽपि मिथ्यात्वमेवेति श्रीहरिभद्रसूरिकृतस्य श्रावकविधिप्रकरणस्य वृत्ताविति गाथार्थः ॥ ५० ॥

अथ मिथ्यादृग्मार्गाभिमतक्रियाणां फलं दर्शयन्नतिप्रसंगमाह—

**जं ताओ किरिआओ, थिरयाहेऊ असग्गहाण सिं।**
**अण्णह अरिहंता इअ, सद्दहणा होइ सम्मत्तं ॥ ५१ ॥**

व्याख्या—यद् यस्मात् कारणात् ता अनन्तरोक्ता क्रिया—नाम्यन्त पूर्णिमापाक्षिक-स्त्रीजिनपूजानिषेध - श्राद्धमुखवस्त्रिकादिनिषेध जिनप्रतिमातत्प्रतिष्ठानिषेधरूपा 'सिं' ति। तेषां दिगम्बरादीनामसद्ग्रहाणामसद्ग्रहवतां निज निज गुरूपदेशपरतन्त्रक्रियारुचीनामसद्ग्रहस्य स्थिरताहेतवः। यतस्ते दिगम्बरादयः सर्वेऽपि निज निज क्रियापरायणा वयमेव जिनोक्तक्रियाकारित्वेन जैनाः। शेषास्तु सर्वेऽपि जैनाऽऽभासाः जिनोक्तक्रियाकारित्वाभावादित्येवं निज निज मार्गक्रियाभिरेवासद्ग्रहस्य स्थिरता भवति। अथ यदि तेषामसद्ग्रहस्य स्थिरता न स्यात्तर्हि प्रत्यासन्नभावि सम्यक्त्वं भवेत्, तथाभूतश्रद्धानस्य पराभिप्रायेण मार्गानुयायित्वादित्येवं सूक्ष्मदृशा पर्यालोच्यम्।

यत्तु 'अहवा सव्व चिअ, वीयरायवयणाणुसारि ज सुकद'मित्यादिचतु शरणप्रकीर्णकगाथावृत्तौ मिथ्यादृष्टिसम्बन्ध्यपि मार्गानुयायि कृत्यमनुमोदनीय भणित, तत् सम्यक्त्वाऽभिमुखमिथ्यादृष्टेरेवाऽवसातव्यम् । स चाऽऽगाढमिथ्यादृष्टिर्न भवत्येव, किन्तु कश्चिदनागाढमिथ्यादृष्टिर्वक्ष्यमाणमार्गाऽनुयायि कृत्य कुर्वन्नेव सातव्य इति गाथार्थ ॥ ५१ ॥

अथ मार्गाऽनुयायि कृत्य कीदृशं भवतीति दर्शयति–

ता सममग्गामग्गह–परिचायनिमित्तमेव ज किच्च ।
सम्मत्तकारण वा, त खलु मग्गाणुसारित्ति ॥ ५२ ॥

व्याख्या–'ता' तस्मात् कारणात् स्वस्वमार्गा –शाक्यादि दिगम्बरादिदर्शनानि, तद्विषयोऽसद्ग्रह –निजनिजगुरूपदेश परतन्त्रविलक्षण, तत्परित्यागस्य निमित्त कारण यत्कृत्य, वा–अथवा, सम्यक्त्वकारण शुद्धश्रद्धानादिहेतु, तत् खल्ववधारणे, तदेव मार्गाऽनुयायि कृत्य–ज्ञानादिप्राप्त्यनुकूलमित्यक्षरार्थ । भावार्थ पुनरेव यद्यपि आगाढमिथ्यादृष्टेर्मार्गाऽनुयायि कृत्य प्रायो न सम्भवति, पर तथापि कस्यचित्तथाभव्य वयोगेन मन्दीभूताऽऽगाढमिथ्यात्वस्यासद्ग्रहपरित्यागद्वारा सम्यक्त्वप्राप्ति स्यात् । यदागम –'मग्गाणुसारिअ'त्ति । व्याख्या–'असद्ग्रहपरित्यागेनैव तत्त्वप्रतिपत्तिमार्गाऽनुसारितेति वन्दारुवृत्तौ । तेनाऽसद्ग्रहपरित्यागहेतुरेव मार्गाऽनुयायि कृत्य । ततो येन कर्तव्येनाऽसद्ग्रहपरित्यागो न भवति (तन्मार्गाऽनुयायि कृत्यमपि न भवती)ति तात्पर्य । अनाऽऽगाढमिथ्यादृशा तु असद्ग्रहाऽभावेन यत्कृत्य

सम्यक्त्वप्राप्तिहेतुस्तदेव मार्गाऽनुसारीति विकल्पो दर्शित इति गाथार्थ ॥ ५२ ॥

अथाऽसद्ग्रहपरित्यागहेतु स्वरूपत कीदृग् भवतीति प्रसङ्गतो दर्शयति—

**ज किंचिवि परसमए णाभिमय अभिमय च जिणसमए।**
**सम्मत्ताभिमुहाण, त खु असग्गहविणासयर ॥ ५३ ॥**

व्याख्या–यत् किञ्चिदपि, कृत्य श्रद्धान वेति विशे व्यपदमध्याहार्यं, परसमये–जैनव्यतिरिक्तदर्शने, नाऽभिमत–निजमार्गत्वेन नाऽङ्गीकृत, अभिमत च जैनसमये–जैनशासने, जैनैरात्मीयमार्गत्वेनाऽभ्युपगतमित्यर्थ । सम्यक्त्वाऽभिमुखाना 'त खु' त्ति । तदेव असद्ग्रहविनाशकर–सम्यक्त्वसूर्यप्रकाश-स्पृष्टानामसद्ग्रहध्वान्तोच्छेदकमित्यर्थ । असद्ग्रहपरित्याग-पूर्वकसम्यक्त्वप्राप्तिहेतुत्वात्। न चैव तन्मार्गाऽभिमताऽकरण नियमादिकमपि तथा। तस्योभयवादिसम्मतत्वेन असद्ग्रह परित्यागो दूरे, प्रत्युत तदुभयवादिसम्मत जैनसम्मत्योद्भा वित निजनिजमार्गदाढ्र्यहेतु । अत एव आस्तामन्य, सर्वज्ञो भगवान् श्रीमहावीरोऽपि उभयवादिसम्मतार्थैर्वेदपदैरेव गौत मादीना सशयोच्छेद कृतवान्, परकीयसम्मतैर्निजमार्गदाढ्र्य-हेतुत्वात्। अन्यथा तदुद्भावनस्य वैयर्थ्यं स्यात्। यदि चोभयवादिसम्मत कृत्य श्रद्धान वा असद्ग्रहपरित्यागहेतु मार्गाऽनुयायि कृत्यमभविष्यत्, तर्हि सर्वेषामपि व्यक्तमिथ्यादृशा तत्क्षणमेवाऽसद्ग्रहपरित्यागेन सम्यक्त्वप्राप्तौ व्यक्तमिथ्यात्वमुच्छि

त्रसकथमेवाऽभविष्यत्, प्राणातिपाताद्यकरणनियमस्य वचोमात्रेण प्राय' सर्वसम्मतत्वात्। तस्मात् सत्यप्यकरणनियमादौ निज मार्गाऽसद्ग्रहस्य तादवस्थ्य किं निमित्तमिति पर्यालोचनाया द्रव्यतोऽपि शुभकर्तृयस्योभयवादिसम्मतमेव परिशेषात् सिध्यति। अत एव 'देवोऽर्हन्नेवे'त्यादिव्यक्त्या श्रद्धानादौ सत्यपि लोको त्तरमिथ्यादृष्टेरसद्ग्रहस्याऽपरित्याग। उत्सूत्रभाषिणा तथाभूत श्रद्धानस्यैवासद्ग्रहत्वेन परिणमनात्। बीज तावदस्मदीयो मार्गोऽर्हता भाषित इति श्रद्धानमेवेति तात्पर्यमिति गाथार्थ।५३।

अथाऽऽगाढमिथ्यादृशोर्मध्ये यल्लोकोत्तरमागाढतरमिथ्यात्व, तदधिकृत्य विशेषमाह—

तत्थवि ज लोउत्तर-मागाढतर विराहगस्स तय।
जेण हविज्ज तेण, दव्वेणवि अलियवयणुत्ति॥ ५४॥

व्याख्या–तत्रापि–लौकिकलोकोत्तरयोरागाढमिथ्यादृशोर्मध्ये अभिग्रहिकापक्षया अभिनिवेशी आगाढतरोऽवसातव्य, अभि निवेशमिथ्यात्वमागाढतरमित्यर्थ। तत्र हेतुमाह–'विराहगस्से'-त्यादि। येन कारणेन 'तक' तत् अभिनिवशमिथ्यात्व विरा-धकस्यैव भवति, तेन कारणेन द्रव्येणाऽपि–द्रव्यतोऽप्यलीक-वचन जैनप्रवचन प्रतीत्येतिशेष। अनुवादेनाऽपि जिनवचनाऽ पलापित्वात्। अय भाव –अभिनिवेशी हि नियमात् उत्सूत्र-मार्गस्थित सन्मार्गनाशक एव स्यात्। तेन तस्य नियमा-दनन्तससार। यदागम –

उम्मग्गमग्गसपट्ठि आण साहूण गोअमा ! णूण ।
ससारो अ अणतो, होइ अ सम्मग्गणासीण ॥१॥ ति गच्छाचारप्रकीर्णके। अत्रोमार्ग उत्सूत्रभाषिमार्ग, तस्य मार्ग:- परम्परा, तत्र सम्प्रस्थितानां मार्गनाशकानां चेत्यादि। तत्र मार्गनाशकत्व च प्राक् प्रदर्शितप्रकारेणावसातव्यम्। शाक्यादिराभिग्रहिकस्तु पृष्ट सन् जैन जैनत्वेन, अजैन चात्मीय मार्ग-मजैनत्वेन भाषमाणो द्रव्यत सत्यवादी। द्रव्यत्व च जैनमार्ग जैनत्वेन भाषमाणोऽपि सत्यत्वेन श्रद्धानाभावात्। तच्च द्रव्यत सत्य भावत सत्यत्वस्य कारणमपि स्यात्। तेनैव कारणेन शाक्यादिर्जिनप्रवचन सम्यगिति सामान्यत श्रद्धानमात्रेणापि निजमार्गाऽसद्ग्रहपरित्यागेन अव्यक्तसम्यग्दृष्टिरित्यभिधीयते। अभिनिवेशिनस्तु दिगम्बरादे देवोऽर्हन्नेव, नापर शाक्यादि-परिगृहीतजिनप्रतिमाऽपीतीत्येव व्यक्त्या श्रद्धानेऽपि निजमार्गाऽसद्ग्रहस्य तादवस्थ्यात् मिथ्यादृष्टित्वमेव। तत्र कारण तावत् दुरपनेयाऽसद्ग्रहवशेन द्रव्यतोऽपि मृषाभाषित्वमेव। तेन मिथ्यात्वमप्यस्याऽऽगाढतरमेव, असाध्यव्याधिकल्पत्वादिति गाथार्थ ॥५४॥

अथोत्सूत्रभाषी देशेन जिनवचनानुवादी भवति नवेत्या शङ्क्याह—

देसेण जिणवयणा णुवाइणो तहवि ते न तहभूआ।
णिअवयनिरोहियवयण, जिणिंदवुत्तंपि णो वुत्त ॥५५॥

व्याख्या—देशेन जिनवचनाऽनुवादिनो भवन्ति, यद्यपीति

गम्य, तथापि ते उत्सूत्रभाषिणो न तथाभूता –नाऽनुवादिन इत्यर्थ । यत इति गम्यम् । यतस्ते निजवचनविरोधिवन्न जिनेन्द्रोक्तमपि नोक्तमिति वदन्ति । एव च सति तेषां निज वचनमेव प्रमाण सम्पन्नम् । न पुनर्जिनेन्द्रेणोक्त, तस्यानुक्तत्वेन भणनात् । यत्तु व्यवहारत क्वचिदनुवादसदृश दृश्यते, तत् तत्ताऽऽभासरूपमवसातव्यम् । अय भाव –उत्सूत्रभाषिभि र्निजनिजमार्गप्रवर्तनावसरे यावदनुष्ठानादिक निज निजप्रक्रिया रूपतया विकल्पित, तत्र किंचिद् जिनोक्तवचनमप्यादाय प्रक्रियारूपतया विकल्पित यदुक्त तनन्ते भगवत्प्रणीतशास्त्रेभ्यो गौण समीचीनमित्यादि प्राक् प्रदर्शित बोध्यम् । एव च यावदुत्सूत्र भाषिमार्गेऽनुष्ठानादिक तत् सर्व निजनिजप्रक्रियारूपतया विकल्पितम् । अन्यथा जैनाऽऽभासत्वासम्भवादिति गाथार्थ ॥५५॥

अथोक्तार्थसमर्थनाय दृष्टान्तगर्भगाथामाह–

जह विसलित्ते पत्ते, दुद्ध ववहारओ विस इहरा ।
एव उस्सुत्तजुए, पत्ते सुत्त पि विन्नेअ ॥५६॥

व्याख्या–यथा विषेण हालाहलादिना लिप्ते प्रक्षिते पात्रेस्थाल्यादिभाजने दुग्धमाधाराधेयभावसम्बन्धेन नियोजित व्यव हारतो दुग्धमुच्यते । इतरथा, दुर्गम्य । इतरथा तु–निश्चयतस्तु विषमेव, विषस्यैव कार्यकरणात् । एवमुत्सूत्रयुक्ते पात्रे उत्सूत्र भाषिजने सूत्रमपि विज्ञेयम् । दृष्टान्तदार्ष्टान्तिकयोर्योजना त्वेव यथा विषमिश्रिते भाजने व्यवहारतो दुग्धमपि निश्चयतो विषमेव । एवमुत्सूत्रभाषिजने व्यवहारत किंचित् सूत्रमपि

निश्चयत उत्सूत्रमेव । व्यवहारोऽपीह मुग्धजनापेक्षया मन्तव्य । विदुषा तूभयत्रापि उत्सूत्रमेव । तच्च जिनोक्तमेव न भवति । अतो न जिनोक्तानुवाद । यथा विषसंयुक्त दुग्ध गव्य न भवति, तथाभूतस्य दुग्धस्य गोरनात्मत्वात्। न च गोदध्यादौ व्यभिचार' शङ्कनीय । इद दुग्धमिति व्यवहार यावन्निजस्वरूपाऽपरित्यागात। अत एव निश्चयव्यवहाराभ्या दुग्धमेव । यच्चोक्तमुपधान पञ्चाशके—उत्सूत्रवचनद्वयव्यतिरिक्त गोष्ठामाहिलोक्त प्रमाण-तया भणित, तद् व्यवहारतो जिनवचनाऽनुवादरूपत्वेनोक्तमव-सातव्यम् । न पुनर्गोष्ठामाहिलोक्तत्वमात्रेणापि । एतदुक्तक तु उत्सूत्रद्वयभणनेन शेष तु सूत्रमेवेति वचनमर। सूत्र तु गणधर-कृतत्वेन प्रमाणमेव । तदनुवादस्तु तद्वदेव प्रमाण व्यवहारतो, निश्चयतश्च प्रागुक्तवदवसातव्यम् । यदि च निश्चयतोऽपि तदनुवाद प्रमाण भवेत्, तर्हि गोष्ठामाहिलसमीप धर्मकथा श्रवणनिषेधानुपपत्ति प्रसज्येत । न चैव निश्चयव्यवहारयो-र्विवेकेन भणनमनागमिक भविष्यतीति शङ्कनीयं, आगमेऽपि तथैव भणनात् । तथाहि—

पयमक्खरपि इक्कपि, जो न रोएइ सुत्तणिद्दिट्ठ ।
सेस रोअतो विहु, मिच्छादिट्ठी जमालिव्व ॥ १ ॥ इति

पञ्चसग्रहादौ । अत्र 'शेष रोचयन्नपी' ति भणनेन स्वरुच्य विषयाक्षरादिव्यतिरिक्तस्य जिनवचनमात्रस्य श्रद्धान व्यवहारत एव । तदनुसारेण भणनमपि जिनवचनाऽनुवादो व्यवहारत एव । स चानुवादो द्रव्यत सत्य एव । सर्वेषामप्यनुवादानां

द्रव्यत सम्यक्त्वेनाऽऽवश्यकत्वात् । अन्यथा अनुवाद एव न स्यात्, उक्तस्य वचनाभावात । निश्चयतस्तु अनुवादेऽभिनिवेशाऽसम्भवात् । नहि लौकिकमिथ्यादृष्टि निश्चयत द्रव्यत सम्यग्वादी जमालिवदभिनिवेशी स्यात । एतच्चाग्रे वक्ष्यते । एतेन मिथ्यादृष्टिरयुक्तोऽनुपयुक्तो वा यद् भाषते, सा मृषैवेति प्रागुक्तवचनेन सह विरोधगन्धोऽपि परास्ता । भावनाऽसम्भवमापि तमधिकृत्यैवोक्तत्वात् । अन्यथाऽनुवादस्याऽसम्भवापत्त्या जगद्व्यवस्थाभङ्ग प्रसज्येत । अत एवाऽनुवादवचनाद्यधिकृत्य जैनै सह विरोधाभाव मिथ्यादृशामपीति । मिथ्यादृष्टित्व च भावतस्तदश्रद्धानात् । तच्चाऽर्हदादिष्वदेवत्वादिबुद्धिद्वारैव स्यात् । सा च बुद्धिर्जिनोक्तस्याऽक्षरस्याऽप्यश्रद्धा दूरे, सन्देहेनाऽपि स्यात । यदुक्त-'एकस्मिन्नप्यर्थे, सन्दिग्धे प्रत्ययोऽर्हति हि नष्ट । मिथ्यात्वदर्शन तत, स चादिहेतुर्भवगतीना' ॥१॥ मिति श्री आ० नि० वृ० । एतेनात्मूत्र भाषितां देशेनाऽपि जिनवचाऽनुवादो द्रव्यत सम्यक्त्वाऽपि व्यवहारत एव, न पुनर्लौकिकमिथ्यादृशामिव निश्चयतोऽपीति तात्पर्यमिति गाथार्थ ॥ ५६ ॥

अथ लौकिकमिथ्यादृगपेक्षया लोकोत्तरमिथ्यादृष्टिर्वैरीयानिति भ्रान्तिनिरासार्थमाह–

लोइयमिच्छादिट्ठी, सम्मदिट्ठि व्व वयणमित्तस्स ।
अणुवाए अविवाई, णिच्छयओ दव्वसम्मत्तयरा ॥ ५७ ॥

व्याख्या—लौकिकमिथ्यादृष्टि सम्यग्दृष्टिवद् वचनमा-

त्रास्याऽनुवादे अविवादी स्यात्–वचनमात्रस्याऽनुवादमधिकृत्य सम्यग्दृग् मिथ्यादृशोरभेद एव स्यात्। तेनोभावपि द्रव्यत सत्यवादित्वमधिकृ य तुल्यावेव भवत इत्यर्थ। तेनैव सम्यग्दृष्टिवद् लौकिकमिथ्यादृष्टिरपि नोत्सूत्रभाषी स्यात्, जिनवचनाऽपलापित्वाभावात् जिनोक्तानुक्तयोर्याथार्थ्येन भाषणात्। न चैव लोकोत्तरमिथ्यादृष्टि सम्भवति। तस्य जिनेनोक्तमप्यनुक्त, अनुक्त चोक्तमित्येवरूपेण जिनवचनाऽननुवादिन उत्सूत्रभाषित्वात्। एव देशेनाऽननुवादित्ववद् देशेनाऽनुवादित्वमपि भवति, पर निजवचनाऽविरोधेनैनेति बुद्ध्या अनुवादो व्यवहारतो द्रव्यत सत्यो, न पुनर्निश्चयत। जिनोक्तत्वेनाऽनुवादाभिप्रायाभावात्। यथा गोष्ठामाहिलो भणति–जिनेनापरिमित प्रत्याख्यान स्पृष्टमबद्ध च कर्म भणितमित्येवमननुवदन्नेव तदविरोधेनैव शेषवचनाऽनुवादी व्यवहारतो देशेन द्रव्यत सत्यवादी, न पुनर्निश्चयतोऽपि। एव साम्प्रतीना सर्वेऽपि उत्सूत्रभाषिणो वक्तव्या। नहि—

अकसिणपवत्तगाण, विरयाविरयाण एस खलु जुत्तो।
ससारपयणुकरणे, दव्वत्थए कूवदिट्ठ तो ॥१॥ चि चतुर्विंशतिस्तवनिर्युक्तिवचन जिनेन भणितमिति लौम्पको वदति, निजवचनविरोधिवचनेन निजमतोच्छेदापत्ते। लौकिकमिथ्यादृष्टिस्तु आस्तामन्यत्, निजमार्गदूषकवचनस्याऽपि अनुवादको भवति। यथाऽर्हन्नस्मदीय धार्मिकाऽनुष्ठानमधर्मतया भाषते इत्यादिरूपेणाग्रे वक्ष्यते इति गाथार्थ ॥५७॥

अथ सम्यग्दृष्टिर्मौकिकमिथ्यादृष्टिरेवुभावपि अनुवदन्तौ द्रव्यत सयतादिनौ भवत, तत्र किं कारणमिति परिज्ञानाय अनुवादस्वरूपमाह—

सव्वेवि अणुवाया, णियमा दव्वाओ मग्गवयणाइ ।
अणुवाए अविवाओ, जमणुण्ण मग्गवाईण ॥५८॥

व्याख्या—सर्वेऽप्यनुवादा सम्यग्दृशां मिथ्यादृशां च परस्पर यावन्तो भवन्ति, तावन्तो नियमात्—निश्चयेन द्रव्यत सय वचनानि भवन्ति। द्रव्यत्व च वचनविषयानपेक्ष वचनावसातव्यम्। वचनविषयापेक्षया तु अनुवाद एव न भवति, किन्तु वक्तुर्निज-वचनान्तर्गतत्वेन निजवचनतया परिणतो भवति। 'तन्मध्यपतित स्तद्ग्रहणेन गृह्यते' इति यायात् वक्तुर्वचा च भावत सयमसत्य च भवतीत्यग्रे दर्शयिष्यते। अथ सर्वेषामप्यनुवादानां द्रव्यत सयत्वे हेतुमाह—'अणुवाए' इत्यादि। यत्—यस्मात् कारणात् सर्ववादिनामनुवादे अयोऽयमविवादा—विवादाभाव, द्रव्यत सम्यक्त्वाभावे च नियमेन विवादो भवत्येव, तस्यैव विवादकारण त्वात्। यथा जिनवचनाऽननुवादिभि पौर्णिमीयकादिभि सह विवाद। यथा लोकेऽपि गा गज ब्रुवाणेन सह विवादो निश्चितो भवति। तस्मात् सर्वेषामप्यनुवादानां साम्यमेवेति गाथार्थ ॥५८॥

अथ विवादकारणान्याह—

अणुवायाण निसया, मद्दाऽणुट्ठाणवायगयाइ ।
पइमग्ग भिन्नाइ, तहिं विवाओ अ सव्वेसिं ॥ ५९ ॥

व्याख्या–अनुवादानां विषया धर्ममधिकृत्य श्रद्धाऽनुष्ठान-वाचकवचांसि भवन्ति। तत्र श्रद्धानं श्रद्धा–स्वाभिमत देव गुरु-धर्म-तदितरविषयकाऽऽराध्याऽनाराध्यबुद्धि, अनुष्ठानं च–धार्मिकबुद्ध्या प्रवृत्तिनिवृत्तिरूपा क्रिया, एतद् द्वयं च प्रतिवादिनं भिन्न भिन्नमेवेति सर्वसम्मतम्। तयोश्च वाचकानि वचनानि प्रतिमार्गं भिन्नभिन्नान्येव। सर्वेषामपि वादिनां भिन्न-भिन्न श्रद्धा क्रियावत्त्वात्। तैर्वचनैः सह विवादः सर्वेषामपि समान एवेति गाथार्थः ॥ ५९ ॥

अथाऽनुवादोऽपि यथाऽनुवक्तुरनुवादव्यतिरिक्तवचनं भवति, तथाऽऽह–

अणुवाओ निअवयणं, सम्माइविसेसणहिं संजुत्तो।
तं भासगमासज्ज उ, सच्चमसच्चं च भावाओ ॥ ६० ॥

व्याख्या–अनुवादः सम्यगादिविशेषणैः संयुक्तोऽनुवक्तुरनुवादव्यतिरिक्तं निजवचनं भवति। तच्चेति गम्यम्। तच्चाऽनु(वाद)वक्तुर्वचनं, भाषकं वक्तारमासाद्यानुवक्तारं प्राप्य भावतः सत्यमसत्यं च भवति। तत्र्यतः सत्योऽप्यनुवादस्तदतिरिक्ताऽनुवादकवचनतया परिणतो भावतः सत्यमसत्यं चाऽनुवादकवचनं भवतीत्यक्षरार्थः। भावार्थः पुनरेवं अनुवादो हि नियमात् वचन-विषयको भवति। 'उक्तस्य वचनमनुवादः' इति वचनात्। तथैव भगवतीवृत्तावपि भणितम्। स चानुवादः सम्यगादि-वचनविशेषणविशिष्टोऽनुवादकवचनं, तथाहि–अस्माकं देवो ऽर्हन्नेवेति जैनवचनं, अस्माकं देवः सुगत इति सौगतवचनं

तथाऽस्माकं देवोऽर्हन्नेवेति जैना, सुगत एवेति सौगता वद न्तीत्येव रूपानुवचनुर्वचनमनुवादो भवति। जैन-सौगताभ्यां तथैव उच्यमानत्वात्। स एवाऽनुवादो जैना देवमर्हन्तं वदन्ति तत् सम्यग्, अर्हति देवत्वस्य विद्यमानत्वात्। सौगतास्तु असम्यग्वादिनः, सुगते देवत्वस्याऽसत्त्वात्(ति) यथाविशेषण-विशिष्टोऽनुवादोऽनुवादो—न भवति, जैनैः सौगतैश्चोभय प्रकारेण सम्यगादिविशेषणविशिष्टवचनाभ्यामनुक्तत्वात्। किन्तु परि-णामात् अनुवचनुरेव वचो भवति, निरवचनान्तर्गतस्याऽनुवाद-स्याऽपि निरवचनतया परिणमनात्। 'तदन्तःपतितस्तद्ग्रहणेन गृह्यते' इति न्यायात्। अत एव विशेषणभेदात् विशिष्टभेद' इति वचनमपि। तेन सम्यग्दर्शनं वक्तारमाश्रित्य सम्यग्दृष्टी उच्यमानमिथ्यार्थं, भावतः सत्यं भवति। जैना सम्यग्वादिनः असम्यग्वादिनश्च सौगता इति याथार्थ्येन कथनात्। मिथ्या दृशा तूच्यमानं भावतोऽसत्यमेव भवति, सर्वत्राऽपि वैपरीत्येन भाषणात्। मिथ्यादृष्टिरुपदृष्टोऽनुपयुक्तो वा यद् भाषते, सा मृषैवेति दशवै० नि० वृत्तिवचनात्। एवमनुवादस्याऽनुवादक-वचनतया परिणतौ स्वरूप स्थितमिति गाथार्थ ॥ ६० ॥

अथोक्तार्थसमर्थनाय दृष्टान्तमाह—

जइ परतित्थियवयणं, अणुवयणं होइ नियवरिंदस्स।
मिच्छत्ति वयणजुत्तं, निणवयणं मनआ सच्चं ॥ ६१ ॥

व्याख्या-यथा परतीर्थिकवचस्याऽनुवादो जिनेन्द्रस्य भवति। तथाऽनुवादवचः मिथ्येतिविशेषणविशिष्ट (अनुवादा

तिरिक्त) जिनवचन भवति । तच्च वचन सर्वत –सर्वप्रकारेण, सत्य स्यात् । 'एगतसच्चरयणा सिवगइगमणा जयतु जिणा' इति वचनात् । तच्चैव–'अण्णउत्थिआ ण एवमाइक्खति भासति पण्णवेति परूवेति'त्यादि यावत् 'एगे वि य ण जीवे एगेण समएण दो आउआइ पडिसवेदेति, त० इहभविअ परभविअ च, ज समय इहभविअ आउअ पडिसवेदेति त समय परभविअ पडिसवेदेति, ज समय परभविअ आउय पडिसवेदेति त समय इहभविअ पडिसवेदेति' त्यादिवचनानि परतीर्थिकवचनानि । तानि च तथैव जिनेनोच्यमानानि जिनस्याऽनुवादरूपाणि भवन्ति । तान्यपि 'जे ते एवमाहसु मिच्छ ते एवमाहसु, अह पुण गोअमा ! एवमाइक्खामी'त्यादि यावत् 'एगे वि य ण जीवे एगेण समएण एग आउअ पडिसवेदेति' [ भग० श० ५, उ० ३ ] इत्यादिविशिष्टवचनानि अनुवादव्यतिरिक्तवचनानि भवन्ति । यतो वादिनो निराकरण तदीय–वचनानुवादायत्तमेव भवति । तेन जिनस्यापि तदनुवादो युक्त एव । एव जैनाऽऽमासास्तीर्थंकरवचनानामनुवादका न भवन्ति, जिननाम्नैव प्रवृत्तिमत्त्वेन जिनमनोच्छेदस्य बाधकस्य विद्यमानत्वादिति तात्पर्यमिति गाथार्थ ॥ ६१ ॥

अथ दिगम्बरादय सर्वेऽपि जिनवचनाऽनुवादरहिता केनोक्ता ? इति दर्शयति—

एव जिणिंदवयणाणुवायरहिया दिगबरप्पमुहा ।
णिज्जुत्तिमणिएण, तित्थेणुग्घोसिआ नाउ ॥ ६२ ॥

व्याख्या—एवमुक्तप्रकारेण जिनवचनाऽनुवादरहिता दिगम्बरादय, आदिशब्दात् पौर्णिमीयकौष्ट्रिकाञ्चलिकादयो ग्राह्या। तीर्थेन—श्रीमहावीरव्यवस्थापितसाध्व्यादिसमुदायलक्षणेन उद्घोषिता—उच्चैः शब्देन लोकेभ्यो ज्ञापिता, कथं? आह-अत्यर्थं, तदुल्लेखस्त्वेव—ननु भो लोका! दिगम्बरादयोऽर्हद्वचनाऽनुवादरहिता तीर्थप्रतिपक्षा मोक्षं प्रत्यु मार्गभूता इति ज्ञात्वा परिहरन्त्विति। तीर्थेन किंलक्षणेन? निर्युक्तिसनितेन—निर्युक्त्या प्रेरितेन, निर्युक्तिपदमनुयोगद्वाराद्युपलक्षकम्। एतच्च 'णिव्वाण चिइगागिइ जिणस्स इक्खागसेसगाण तु' इत्यादि प्रागुपदर्शितमिति गाथार्थ ॥ ६२ ॥

अथ पराभिप्राय दूषयितु प्रथम पराभिप्रायमाह—

तेसिं सव्वेसिं चिअ, णिअणिअमग्गा हवंति तित्थाइं।
सेसं सव्वमतित्थं, इय बुद्धी सासया तेसिं ॥ ६३ ॥

व्याख्या—तेषा—जैनाऽऽभासाना सर्वेषा सम्प्रति दिगम्बरादिपाशचन्द्रीयपर्यन्ताना निज निजमार्गा स्वस्वाभिमतसाध्व्यादिसमुदायास्तीर्थानि भवन्ति। यथा दिगम्बरस्य नग्नावेव देवगुरू भवन इति श्रद्धानात्मक (वान्) समुदायस्तीर्थं। पौर्णिमीयकादीना च पूर्णिमापाक्षिककृत्यश्रद्धानात्मकसमुदायास्तीर्थानि भवन्ति। शेष स्वस्वाभिमतमार्गाऽतिरिक्त सर्वमप्यतीर्थमिति शाश्वता—नियता बुद्धिरिति तेषामभिप्राय इति गाथार्थ ॥६३॥

अथैव स्वस्वाभिमततीर्थाना भिन्नत्वे सिद्धे तीर्थकरमधिकृत्याऽमेन्बुद्धि निराकुर्वन्नाह—

एएण सव्वेसिं, एगो तित्थयरोत्ति दुव्वयण।
सव्वेसिं तित्थाण, आइगरा इति तित्थयरा॥ ६४॥

व्याख्या—एतेन—नाम प्ररूपणादिना भिन्नत्वभणनेन सर्वे षामपि जैनाना जैनाऽऽभासानां च तीर्थकर, तुरप्याद्यर्थस्तीर्थ करस्तु नाम्ना साम्येन एक एवेति वचन दुर्वचा—पापवचन, तत्र हेतुमाह यत इति गम्य, यत कारणात् सर्वेषामपि वादिनामा दिकरा एव तीर्थङ्करा भवन्ति। यथा श्रीऋषभादितीर्थानामा दिकरा' श्रीऋषभादयो देशकालादिना भिन्न-भिन्नस्वरूपा भवन्ति। न पुन सर्वेषामपि तीर्थानामेकस्तीर्थङ्कर। एव दिगम्बरादिसमुदायानां तीर्थत्वेनाभिमताना भिन्नभिन्नप्ररूपणा ऽऽचारादिमतां सुतरां भिन्नभिन्ना एवादिकरा भवन्ति। पर श्रीऋषभादीना तीर्थकरत्वेन तत्त्व्यवस्थापितसमुदायानां च तीर्थत्वेन परस्पर श्रद्धानमधिकृत्य भेदाभाव, प्ररूपणादिना भेदा भावात्। दिगम्बरादीनां तु परस्पर वैपरीत्यमिति विशेषो बोध्य इति गाथार्थ॥६४॥

अथ दिगम्बरादीनामादिकतार के? इति प्रश्ने नामग्राहेण तानाह—

तेसिं तित्थयरा पुण, सिवभूइप्पमुह णाम आइगरा।
वीरजिणो अम्हाण, तित्थयरो त मइ असच्च॥ ६५॥

व्याख्या—तेषा—दिगम्बर पौर्णिमीयकौष्ट्रिकाऽऽञ्चलिका ऽऽगमिक लौम्पक कटुक बन्ध्य पाशचन्द्रीयाणां, पुनर्नामेति कोमलामन्त्रणे, तीर्थकरा क्रमेण शिवभूतिप्रमुखा, प्राकृतत्वाद्धि

भक्तिलोप, प्रमुखशब्दात् चन्द्रप्रभाऽऽचार्य जिनदत्ताऽऽचार्य नरसिंहोपाध्याय - सुमतिसिंहाऽऽचार्य शीलदेव-लुम्पक कटुक वन्ध्य पाशचन्द्रनामानो ग्राह्या । शिवभूतिचन्द्रप्रभाऽऽचार्यादीनामेव दिगम्बर पौर्णिमीयकादितीर्थानामादिकरत्वात् । एतच्च प्राय तदीयग्रन्थानुसारेण केषाञ्चिच्च लौम्पकादीनामाधुनिकत्वेन किंवदन्त्यापि प्रतीतमेव । यत्तु तेषा जैनत्वेन ख्यातिनिमित्त तीर्थस्पर्द्धानिमित्त चाऽस्माक तीर्थकरो वीर इति नाममात्रेण भणन, तन्महद्दुरन्तमसत्यमलीकभाषण, श्रीमहावीरेण सह सम्बन्धाऽभावात् । सर्वथा सम्बन्धाऽभावे च तत्तीर्थत्वाभ्युपगमे जगद्व्यवस्थाभङ्ग प्रसज्येत । नहि दिवगते देवदत्ते कन्याया परिणयनपूर्वकपुत्रोत्पत्ति किं केनाऽपि दृष्टा श्रुता वा? एव श्रीमहावीरात्तेषामुत्पत्तिरसम्भविनीति गाथार्थ ॥६५॥

अथ जैनाऽऽभासाना श्रीमहावीर तीर्थकरो न भवतीति नास्माभिरेवोच्यते, किन्तु तदीयैरपि तथैवोच्यमानमस्तीति दर्शयति—

णिअपरतित्थगरत्ता, तित्थयरो णेव तेसिं वीरजिणो ।
णिअतित्थ अण्णाओ, अण्णमतित्थत्ति सद्दहणा ॥ ६६ ॥

व्याख्या—निजस्य परेषा च तीर्थानि निजपरतीर्थानि, तानि करोतीति निजपरतीर्थकर, तस्य भावस्तत्त्व तस्मात् श्रीमहावीरस्तीर्थकरो न भवति । तत्र हेतुमाह—'णिअतित्थ'मित्यादि । यतो निजतीर्थमन्यस्मात्—श्रीमहावीरादन्य शिवभूत्यादि तस्माज्जातमिति शेष । अयत्, चकारो गम्य, अयच्च—

पराभिमततीर्थादपर चातीर्थं-तीर्थं न भवतीति श्रद्धानादित्य-क्षरार्थं । भावार्थ पुनरेव—यद्यपि दिगम्बरो जैननामधारी तथापि निजमतिकल्पितेन लिंगेन सूत्रतोऽपि सिद्धान्तेन चान्यतीर्थिक-कल्प, तेन स परित्यज्य प्रथम पौर्णिमीयक प्रष्टव्य —ननु भो पौर्णिमीयक ! तव वीरजिनस्तीर्थंकर किं भवदभिमततीर्थस्य पौर्णिमीयकसमुदायस्य आदिकर्तृत्वेन औष्ट्रिकाद्यभिमततीर्थस्या-दिकर्तृत्वेन वा ? नाद्यो, भवतोऽप्यनभिमतत्वात्। यत पौर्णिमीयकसमुदायस्यादिकर्ता चन्द्रप्रभाऽऽचार्य सर्वसम्मत । अत एव भवदीयैरप्युक्त, तथाहि—

'श्रीचन्द्रप्रभसूरिराट् स भगवान् प्राचीकशत् पूर्णिमा'-मिति पौर्णिमीयकृतक्षेत्रसमासवृत्तिप्रशस्तौ । एवममतीर्थकृच्च रिन्नेऽपि। नापि द्वितीय, तत्रानिष्टत्वात्, यतोऽन्यत्, चकारो गम्य, अयञ्च—निजसमुदायादपर यावदस्मदभिमत तीर्थं चतुर्दशीपाक्षिककृत्यविशिष्ट साध्वादिसमुदायात्मक तत्कर्तृत्वेन भवतस्तीर्थंकरो न भवति। तदतीर्थमिति श्रद्धानात तीर्थकरत्वा-ऽतीर्थकरत्वयो परस्पर विरोधात्। तेन तदादिकर्तृत्वेनाऽपि भवतस्तीर्थंकरो न भवति, किन्तु चन्द्रप्रभाऽऽचार्य एव तीर्थंकरो मन्तव्य, पौर्णिमीयकाभिमतस्य तीर्थस्यादिकर्तृत्वात्। अत एव चन्द्रप्रभाऽऽचार्यादि देवस्वरूपमग्रे दर्शयिष्यते। एव लौम्पकोऽपि वक्तव्य —ननु भो लौम्पक ! तवाभिप्रायेण तीर्थं तावत् जिन-प्रतिमाप्रतिपन्थिजनसमुदायरूपमेव तस्यादिकर्ता श्रीमहावीरो न भवति, तेन सह साक्षात्परम्परया वा सम्बन्धाऽभावात्। किन्तु

तन्नाम्नैवाभिव्यञ्जितो लुम्पकनामा लेखकः । अत एवाऽऽबाल-गोपालप्रसिद्धो वृद्धसम्प्रदायोऽपि–'सवत पनर अठोतरइ जाणि, लुङ्क लेहुं मूलनिर्वाणि । तेहनइ शिष्य मिल्यु ल्खमसी, तेहनइ बुद्धि हइयाथी खसी'त्यादि । यदि च तस्य तीर्थकरत्वं नाभ्युपगम्यते, तर्हि तद्व्यवस्थापितो भवदभिमतजनसमुदायस्तीर्थमपि न भवेत्, अतीर्थकरलुम्पकेन व्यवस्थापितत्वात् । तेन यदि भवदीय समुदायस्तीर्थं, तर्हि लुम्पक एव तीर्थकर । तथा च शब्दव्युत्पत्तिरपि सम्यग्, लुम्पको देवताऽस्येति लौम्पक । अथवा लुम्पकस्यापत्य लौम्पक । एव सर्वत्राऽपि सम्यग्पर्यालोचनया यस्य कस्याऽपि समुदायस्य आदिकर्ता नामग्राहेण वक्तु शक्यते, तस्य श्रीमहावीरस्तीर्थकरो न भवत्येव । तदादिकर्तृत्वाऽभावात् । यथा श्रीमहावीरव्यवस्थापितस्य समुदायस्यादिकर्ता श्रीपार्श्वनाथो न भवति, नामग्राहेण श्रीमहावीरस्योपलभ्यमानत्वात् । एव चन्द्रप्रभाऽऽचार्यादिव्यवस्थापितसमुदायाना चन्द्रप्रभाऽऽचार्यादय एव तीर्थकरा, न पुनस्तद्व्यतिरिक्ता श्रीऋषभादयोऽपीति गाथार्थ ॥ ६६ ॥

अथ चन्द्रप्रभाऽऽचार्यादिभ्यो जाताना समुदायाना श्रीमहावीरजातत्वभणने सर्वलोकगर्हणीयदूषणमाह–

जो अण्णाओ जाओ, अण्ण पिअर च अण्णतित्थयर ।
जपइ लोअविरुद्ध, अलज्जओ अहव गयसण्णो ॥ ६७ ॥

व्याख्या–य पौर्णिमीयकादि-लौम्पकादिसमुदाय, अयस्मात् श्रीमहावीरादपरस्मात् चन्द्रप्रभाऽऽचार्यादे लुम्पकलेखका-

देश्च जात समुत्पन्न, अथ—ततोऽपर श्रीमहावीर अस्मदीय समुदायस्याऽऽदिकर्ता श्रीमहावीर इत्येव 'जपइ' त्ति कथयति, कमिव? अन्यपितरमिव—दरिद्र निजपितरमपल्प्य कचन महर्द्धिक पितर अस्मदीय पिता नाऽय, किन्त्वयमेवेत्येव वैपरीत्येन भाषते। तच्च भाषण विरुद्ध सर्वलोके गर्हणीय, एव च भाषमाण कीदृश? अलज्जक न विद्यते लज्जा-लोकापवादभीतिजन्या व्रीडा यस्य सोऽलज्जक। अथवा 'गतसज्ञ'—गता-नष्टा सज्ञा-व्यक्तचेतना यस्मात् स तथा, असज्ञिकल्प इत्यर्थ। तस्मात् तदीयसमुदाया असज्ञित्वात् लज्जारहिता अनसात्या इति गाथार्थ ॥ ६७ ॥

अथ तेषां श्रीमहावीरस्तीर्थंकर इति वचनमपि वक्तुमयुक्तमिति दृष्टान्तेन दर्शयति—

वीरजिणेण ठविअ, तित्थमतित्थति भासगा सव्वे।
माया मे वज्झत्ति अ, वयणविरोह ण याणति ॥६८॥

व्याख्या-वीरजिनेन श्रीमहावीरेण, व्यवस्थापित दु प्पसमाऽऽचार्य यावद् अविच्छिन्नमप्यतीर्थ तीर्थं न भापका वक्तार, सर्वेऽपि जैनाऽऽभासा भवन्ति। मे वन्ध्येति' वचनविरोधमजानाना मन्तव्या। स्थापित तीर्थं न भवेत्, कथ तर्हि स तीर्थङ्कर, कर, कथ तर्हि तद्व्यवस्थापित तीर्थं न स्थापकत्वतीर्थकरत्वयोर्विरोधादिति

अथैव वचनविरोधेन अभिन्ने तीर्थे सिद्धे शेषमतीर्थं तदीयानुमतैर व्यवस्थापयन्नाह—

वीरजिणो जइ देवो, तित्थयरत्तेण तुम्हमम्ह व ।
ता तट्ठविअ तित्थं, सेसमतित्थं सओ सिद्धं ॥६९॥

व्याख्या—यदि वीरजिनो युष्माकमस्माकमिव तीर्थकरत्वेन देव 'ता' तर्हि तद्व्यवस्थापित-अस्मदभिमतसमुदायस्तीर्थं, शेष तु तद्व्यतिरिक्त चन्द्रप्रभाऽऽचार्यादिव्यवस्थापितसमुदायात्मक-मतीर्थं स्वत सिद्ध विना सिद्धमिति गाथार्थ ॥ ६९ ॥

अथैव पौर्णिमीयकप्रमुखादीनां चन्द्रप्रभाऽऽचार्यादिव्यवस्थापित्व सिद्धे चन्द्रप्रभाऽऽचार्यादय स्वस्वाभिमतसमुदायान् प्रति किं देवस्वरूपा उत गुरुस्वरूपा वेति शङ्कायामाह—

लोइयदेवसरूवा, चदप्पहमाइणो ण गुरुरूवा ।
सीसत्ताभावाओ, गुरुवयणसमणायत्ता ॥७०॥

व्याख्या—लौकिकदेवस्वरूपाश्चन्द्रप्रभाऽऽचार्यादय , न गुरुस्वरूपा गुरुस्वरूपभाजो न भवन्तीत्यर्थ । तथा लौकिकदेव स्वरूपत्व च अन्यादन्दोषमाहित्येऽपि देवस्वरूपात् प्रतिमार्ग भिन्नभिन्नप्रक्रियाकरणाच्च । अथ गुरुस्वरूपाऽभावे हेतुमाह—'सीसत्ते'त्यादि । शिष्यत्वाऽभावात् शिष्यत्वमन्तरेण गुरुत्व न भवत्येव । यदागम —

हंतूण सव्वमाणं, सीसो होऊण ताव सिक्खाहि ।
सीसस्स हुंति सीसा, ण हुंति सीसा असीसस्स ॥१॥ त्ति

चन्द्रवेध्यकप्रकीर्णके । तत्रापि हेतुमाह 'गुरुवयण'त्ति । यतस्ते

त्वेनैव यदुक्त, ततस्ते भगवत्प्रणीतशास्त्रेभ्यो गौण समीचीन मर्थलेशमुपादाय पश्चादभिनिवेशत स्वमत्यनुसारेण तास्ता स्वप्रक्रिया प्रपञ्चितन्त । उक्त च—

सुनिश्चितन परतन्त्रयुक्तिषु, स्फुरन्ति या काश्चन सूक्तिसम्पद ।
तवैव ता पूर्वमहार्णवोत्थिता, जगत्प्रमाण जिनवाक्यविप्रुष ॥१॥

इति नन्दीवृत्तौ २१४ पत्रात्मके पुस्तके १६ पत्रे ।

अत एव ते श्रीमहानिशीथादिक सूत्रमपि न प्रमाणयन्ति, निज २ प्रक्रियादूषकत्वात् । यत्तु वय जिनोक्तमेव कुर्म इति वचन, तत् तदीयप्रक्रियावचनानुवादरूपमेव मन्तव्यम् । कथमन्यथा चतुर्दशीपाक्षिक स्त्रीजिनपूजा श्राद्धमुखवस्त्रिकादि यावत् जिनप्रतिमादिक जिनोक्तमप्यनुक्त पूर्णिमापाक्षिक—स्त्रीजिनपूजानिषेध—जिनप्रतिमानिषेधादिक जिनेनानुक्तमप्युक्तमिति भाषते । प्रक्रिया च प्रतिमार्ग भिन्नभिन्नैव भवति । तत्र दृष्टान्तमाह—यथाऽन्यतीर्थिकानां साङ्ख्यशाक्यादीना प्रक्रिया भिन्नभिन्नैव भवति । तत्र हेतुमाह—अज्ञानस्यैव माहात्म्यात् । अज्ञान हि कुत्सितज्ञान । तच्च मिथ्यादृशामेव भवति । तदपि ज्ञानावरणीयक्षयोपशमवैचित्र्यात् नानाप्रकार स्यात् । तेन तज्जन्यप्रक्रियापि नानाप्रकारैव स्यात्, 'कारणानुरूप कार्य'मिति वचनात् । सा च निज २ मार्गाणामादिकर्तृकृतैव भवति । आदिकर्तृत्व च तथाभूतमार्गाणामन्यकर्तुरभावेन चन्द्रप्रभाऽऽचार्यादीनामेवेति प्राक् प्रदर्शित । अत एव निज २ मार्गेषु शास्त्रप्रवृत्तिरपि प्रक्रियानुरोधेनैव स्यात् । तथाहि—'श्री

चन्द्रप्रभसूरिराट् स भगवान् प्राचीकशत् पूर्णिमा'मित्यादि प्राक् प्रदर्शित, तथा–

ण छिविंति जहा देह, ओसरणे भावजिणवरिंदाण ।
तह तप्पडिमपि सया, पूइंति ण सव्वनारीओ ॥१॥ चि
निनदत्ताऽऽचार्यकृतचैत्यवन्दनकुल्के । तथा–

पुण्इ मूलपडिमपि, साविआ चिइनिवासिसम्मत ।
गब्भावहारकल्लाणगपि, णहु होइ वीरस्स ॥१॥ चि जिन
दत्तकृतोत्सूत्रपदोद्घाटनकुल्के । तथा आञ्चलिकेनापि श्रीआ-
वश्यकनिर्युक्तिदीपिकाया–

सामाइयमि उ कए, समणो इव सावओ हवइ जम्हा ।
एएण कारणेण, बहुसो सामाइय कुज्जा ॥१॥ । अत्र
बहुश सामायिककरण जन्मापेक्षया, न तु दिनापेक्षयेति व्या-
ख्यातम् । अत एव सम्यग्दृशा तदीया प्रथा अप्यनुपादेया
एव, सर्वासामपि उक्तप्रक्रियाणा सर्वज्ञमूलकत्वाभावात् । अत
एव जैनप्रवचने प्रक्रियाभेदो न भवति, सर्वपामपि सर्वज्ञानामे-
कवाक्यत्वात् । तेन चतुर्विंशतावपि तीर्थेषु प्रक्रियाभेदो न
भवत्येव । यत्तु आद्यन्तयोस्तीर्थयो पञ्च महाव्रतानि, शेषेषु
तु तीर्थेषु चत्वारि, तन्न प्रक्रियाभेद । स्त्रीपरित्यागस्य
सर्वत्रापि समानत्वात्, सर्वैरपि तीर्थकरै तथैव भणितत्वात्,
एकवाक्यताया अनपायात् । अय भाव –प्रागुक्तप्रकारेण लोको
त्तरमिथ्यादृगभिमताना तीर्थाना तीर्थकराणा च परस्परमपि

भिन्नत्वे सिद्धे सिद्धस्तत्तदभिमत सिद्धान्तोऽपि भिन्न भिन्न एव। यद्यपि स सिद्धान्तो जैनाभिमतसूत्रैकदेशरूप, तथापि स न जिनवचनरूप। किन्तु तत्तदभिमततीर्थंकरवचनरूप, स्वस्वाभिमतमार्गानाबाधयैव अर्थकरणेन निज २ प्रक्रियारूपतया कल्पितत्वात्। सम्मतिस्तु नन्दीसूत्रवृत्ति प्राग् प्रदर्शितैव। प्रक्रियाया प्रणेतारस्तु निज २ मार्गाणामादिकर्तार एव भवन्ति। सिद्धान्तस्य चैकत्वाभ्युपगमे सर्वेषामपि प्रवचनसाधर्मिकत्त्वापत्त्या परस्परमपि प्ररूपणादिना भेदो न स्यात्। अस्ति च भेद। तेन यथाऽस्मदभिमतसिद्धान्ते जैनप्रवचन सम्यगिति क्वापि नोक्तमतो नाऽस्माक तदङ्गीकार। तथा सर्वेऽपि जैनाऽऽभासा प्रक्रियारूपतया विकल्पित सूत्रैकदेश सिद्धान्त पुरस्कृत्य निषेधमुखेन परस्पर ब्रुवाणा मन्तव्या। पर लौम्पको भणति–अस्मदभिमतसिद्धान्ते जिनप्रतिमा आराध्यतया नोक्ता, अतो नाऽस्माक तदङ्गीकार इत्यादि। एतच्च लौम्पकस्यैव अस्माक परेषा च सम्मतमेव। यतस्तदभिमतस्तीर्थङ्करो लुम्पकनामा लेखक सर्वसम्मत। तस्य च प्रतिमा जिनप्रतिमातया विकल्पिता, सा च प्रतिमा आराध्यतया न कस्यापि सम्मता तदरो (तद्विषयक) निप्रतिपत्तेरेवाभावात्। शेषास्तु जैनाभासा स्वस्वाभिमततीर्थकरप्रतिमा आराध्येति वदन्तीति विशेषो बोध्य। एव च सति सर्वेऽपि जैनाऽऽभासा तीर्थतीर्थकरयोर्महाशातनाकारिणो मन्तव्या। सर्वेषामपि स्वस्वाभिमतमार्गाऽतिरिक्तमार्गाणा मिथ्यादृष्टित्वे-

नाऽभ्युपगमे जैनमार्गन्यापि तदन्तर्गतत्वेन मिथ्यादृष्टित्वाऽभ्युपगमात्। अत एवेति नियमेनानन्तससारिण, जैननामधारित्वेऽपि जैनप्रवचनेन सह विरोधादिति तात्पर्यमिति गाथार्थ ॥७२॥

अथैव सति तदीयमुखनिर्गता धार्मिकशब्दा श्रोतव्या न वा इति शङ्कायामाह—

तम्मुहधम्मिअसद्दा, सोउमजुत्ता तहा सुदिट्ठीण।
जह गुट्ठमाहिलमुह-धम्मकहासवणपडिसेहो ॥ ७३ ॥

व्याख्या-तेषां पौर्णिमीयकादीना मुखानि तेभ्योऽथान्नि र्गता धार्मिकशब्दा -मुग्धजनापेक्षया व्यवहारतो धर्मवाचका, सुदृष्टीनां-सम्यग्दृशा, श्रोतुमप्ययुक्ता। केचित्तीर्थकृद्वचनानु वादाभासरूपा अपि निज २ मार्गव्यवस्थापकोत्सूत्रमिश्रितत्वेन निश्चयतस्तन्नीयतीर्थंकरवचनरूपा केवलमनर्थरूपा एव। तत्र दृष्टान्तमाह-'जहे'त्यादि। यथा गोष्ठामाहिल सप्तमो निह्नव, तन्मुखाद्धर्मकथाश्रवण तस्य प्रतिषेध श्रीसपन कृत इति शेष। यदुक्त–

'उवहि १ सुय २ भत्तपाण ३, अजलिपग्गहे त्ति य ४।
दायणा य ५ निकाए य ६, अब्भुट्ठाणेति आवरे ७॥१॥
किइकम्मस्स य करणे ८, वेयावच्चकरणे इय ९।
समोसरणसन्निसेज्जा १० कहाए अ ११ निमतणे १२

॥२॥ एस बारसविहो'त्ति उत्तराध्ययनवृहद्वृत्तौ, तद्दृष्टान्तेनो-त्सूत्रभाषिणा धर्मकथाऽपि न श्रोतव्येति गाथार्थ ॥७३॥

अथ लोकोत्तरमिथ्यादृशमधिकृत्योक्तातिदेशेन विशेषमाह—

एएण लोउत्तर उम्मग्गा सन्हा अदट्ठा ।
णिज्जुत्तीए भणिआ, अणुभणिआ पुव्वसूरीहिं ॥ ७४ ॥

व्याख्या-एतेनान्तरोक्तदोषदर्शन लोकोत्तरमिथ्यादृश सर्वथा-सर्वप्रकारेण, आलापसंलापसम्भुञ्जनादिना अद्रष्टव्या-द्रष्टुमप्यकल्प्या निर्युक्तौ भणिता । तथाहि—

'उम्मग्गदेसणाए, चरण णासिंति जिणवरिंदाण ।
वावण्णदसणा खलु, ण हु लब्भा तारिसा दट्ठु' ॥१॥

त्ति श्रीवन्दननिर्युक्तौ । एतच्चूर्णिर्यथा-'जे पुण जहिच्छो-वलम गहाय अण्णसिं सत्ताण ससार णित्थरितुकामाण उम्मग्ग देसयति, तत्थ गाहा-उम्मग्गदेसणाए क(च)रण अणुट्ठाण णासिंति जिणवरिंदाण सम्मत्त अप्पणो अण्णेसिं च, ते वावण्णदसणा जेण ते क(च)रण ण सद्दहति, मोक्खो अ विज्जाए करणेण अ भणिओ, अण्णेसिं च मिच्छत्तुप्पायणेण, एवमादिएहिं कारणेहिं वावण्ण दसणा, खलुसद्दा जइवि केइ णिन्हयविहीए अ अवावण्णदसणा तहवि ते वावण्णदसणा इव दट्ठव्वा, ते अ दट्ठुपि ण लब्भा किंमग पुण सवासो सभुजणा सथवो वा, हुसद्दो अरिसद्दत्थो, सो अ ववहिअसबधो दरिसिओ चेव, ण लब्भा णाम ण कप्पति' त्ति । यद्यपि कस्यचित्तथाभव्यत्वयोगेन निह्नवेभ्योऽपि सम्यक्त्व-लाभो भवति, तथापि ते मिथ्यात्वोपहतमतया वर्जनीया एव । यदागम -'जइवि हु समुप्पाओ, केसिंचि वि होइ निह्नवेहिंवि ।
मिच्छत्तहयमईओ, तहावि ते वज्जणिज्जाओ' ॥१॥ इति वृहत्कल्पभाष्ये (गा० ११९८) । अय भाव -यद्यपि कस्य-

चिरोगिणो विषभक्षणमपि रोगविशेषविनाशहेतुर्भवति, तथापि विषमन्येन सर्वैरपि परिहरणीयमेव। न पुनस्तद्दृष्टान्तेन अन्यैरपि भक्षणीय। एवमुत्सूत्रभाषिणोऽप्युपदेशो मन्तव्य इत्यर्थः।
ननु भो! यद्यपि निर्युक्तिभाष्यादौ भणित, तथापि कालानुभावात् अर्थैरनुक्तत्वेन सदप्यऽप्रकाश्य भविष्यतीति शङ्का-निरासार्थमाह–'अणुभणिअ'त्ति अनुभणिता–तथैवोक्ता, पूर्व सूरिभि–हरिभद्रसूरिप्रभृतिभि। तथाहि–
'इअरेसुवि अ पओसो, णो कायव्वो भवट्ठिइ एसा।
णवर विवज्जणिज्जा, विहिणा सइ मग्गणिरएण'॥१॥ त्ति उपदेशपदे। वृत्तिर्यथा–'इतरेष्वपि जिनवचनप्रतिकूलानुष्ठानेष्वपि समुपस्थितदुर्गतिपातफलमोहाद्यशुभकर्मविपाकेषु लोकोत्तरभिन्नेषु, जन्तुषु प्रद्वेषो–मत्सरस्तद्दर्शने तत्कथायां चाक्षमारूपो, नो–नैव, कर्तव्य। तर्हि कर्तव्य? इत्याह–भवस्थितिरेषा यत कर्मगुरवो ऽद्यापि अकल्याणिनो जिनधर्माचरण प्रति प्रह्वपरिणामा न जायन्ते इति चिन्तनीयम्। नवर–केवल, वर्जनीया –आलापसंलापविश्रम्भादिभि परिहरणीया, विधिना–विविक्तग्रामनगरवसत्यादिवा सरूपेण, सदा सर्वकाल, मार्गनिरतेन सम्यग्दर्शनादिमोक्षमार्गस्थितेन साधुना श्रावकेण च। अन्यथा तदीयाऽऽलापसंलापसम्भाषणादिना संसर्गकरणेन कुष्ठज्वररोगोपहतमंसर्ग इव तत्तद्दोषसञ्चारात् इहपरलोकयोरनर्थावाप्तिरेव। अत एवोक्त–
'सीहगुह वग्घगुह, उदय च पलित्तयपि सो पविसे।
असिव ओमायरिज, दुस्सीलजणप्पिओ जो उ'॥१॥त्ति।

प्रागभणितमपि प्रयोजनवशेनेह स्मारितमिति। प्रभृतिशब्दात् यावत् श्रीमुनिसुन्दरसूरिप्रमुखा ग्राह्या।

यत —उपधानप्रतिक्रान्ति-जिनार्चादिनिषेधत।
न्यूनिता दु पमादोपात् प्रमत्तजनताप्रिया ॥१॥
तथा—आज्ञाभङ्ग तरायोत्था ऽनन्तससारनिर्भयै।
सामाचार्योऽपि पाश्चात्यै, प्राय स्वैर प्रवर्तिता ॥२॥

इति श्रीमुनिसुन्दरसूरिकृतत्रिदशतरगिण्या। यथा कालाऽनुभावाल्लोकोत्तरोमार्गा भूयास, तथा तीर्थान्तर्वर्तिनोऽपि साधव श्रावकाश्च अनाभोगवशेन जिनाऽऽज्ञारुचयोऽल्पीयास प्रायो मन्तव्या। यदुक्त—

'एअ पाएण जणा, कालाणुभावा इहवि सव्वेवि।
णो सुदरत्ति तम्हा, आणासुद्धेसु पडिबधो'॥१॥ त्ति

वृत्तिर्यथा—'एवमुक्तोदाहरणवत् प्रायेण-बाहुल्येन, जना-लोका, कालाऽनुभावात-वर्तमानकालसामर्थ्यात्, इहाऽपि-जैनमतेऽपि, सर्वेऽपि साधव श्रावकाश्च, नो नैव, सुदरा शास्त्रोक्ताऽऽचारसारा वर्तन्ते। किन्त्वनाभोगदोषात् शास्त्रोक्तप्रतिकूलप्रवृत्तय। इति पूर्ववत्। तस्मात् कारणात् आज्ञाशुद्धेपु सम्यगधीतजिनागमाऽऽचारवशात् शुद्धिमागतेपु साधुषु श्रावकेषु च, प्रतिबन्धो बहुमान, कार्य।' एव लोकोत्तरमिथ्यादृशो यथा द्रष्टुमप्यकल्प्यतया भणिता, तथा भाष्यकारोऽपि—

'जे जिणवयणुत्तिण्ण, वयण भासति जे उ मण्णति।
सद्दिट्ठीण तद्दसणपि ससारवुड्ढिकर' ॥१॥ ति।

न चैव लौकिकमिथ्यादृष्टोऽपि भविष्यतीति शङ्कनीय। तेषां मामादिभि परित्यागाऽसम्भवेनोक्तप्रकारासम्भवात। नहि बराप्यागते उत्सूत्रभाषित्वात् मोन्यादयोऽपि जैनप्रवचन विध्वंसका इति भणित। तेषां जैनं जैनत्वेन भाषमाणानां जिनवचनानुवादित्वेन जैनप्रवचनविध्वंसकत्वाभावादुत्सूत्रमपि तत्तु जैनमजैनत्वेन भाषमाणा जिनवचनानुवादितया जमाल्यादयो जैनप्रवचनविध्वंसका इति तात्पर्यमिति गाथार्थ ॥७४॥

अथ तीर्थप्रतिपक्षाणां यदि उक्तप्रकारेण सूत्रार्थयो परित्याग भविष्यत्, तर्हि ते किमकरिष्यन्नित्याह—

एव न सुत्तमत्थ, सम्म जाणिसु तित्थपडिवक्खा।
ता अणुओगदार, चइसु जह महाणिसीहपि ॥ ७५ ॥

व्याख्या—एव प्रागुक्तप्रकारेण, सूत्रमर्थं च तीर्थप्रतिपक्षा – उत्सूत्रभाषणेन तीर्थविध्वंसका। यदीति गम्य, यदि सम्यग् घुणाक्षरन्यायेनाऽपि समीचीनमज्ञास्यत् 'ता' तर्हि अनुयोग द्वारमप्यत्यक्षत्, उपलक्षणात् निजवचनविरोधिवचनान्तरमपि श्रीभगवतीप्रमुखमपि त्यजन्। दृष्टान्तमाह–'जहे'त्यादि। यथा महानिशीथमपि श्रीमहानिशीथसूत्रमपि त्यक्त, अपिशब्दात् निर्युक्त्यादिकमपि त्यक्तमिति गाथार्थ ॥७५॥

अथ श्रीमहानिशीथवदनुयोगद्वारपरित्यागे हेतुमाह–

ज अणुओगे आगम, तिविहो दुविहा अ अणुगमा भणिओ।
सो तस्सेव पमाण, जस्स य णिज्जुत्तिपमुहपि ॥ ७६

व्याख्या–यत्–यस्मात् कारणात्,

आत्मागमाऽ १ नन्तरागम २ परम्पराऽऽगम ३ लक्षणस्त्रिविध आगम, सूत्रानुगमो १ निर्युक्त्यनुगमश्चेति द्विविधोऽनुगमो भणित। स चाऽऽगमोऽनुगमश्च तस्यैव प्रमाण–सत्यतया अंगीकार, यस्य निर्युक्तिप्रमुख निर्युक्तिभाष्यचूर्ण्यादिकमपि, प्रमाणमितीहापि सम्बध्यते, प्रमाणं भवेत्। अथ भाव यथा चतुर्दशीपाक्षिककृत्योपधानमालारोपणजिनप्रतिमाराधनाद्यभिधायकत्वेन यथासम्भव निज २ मतदूषक श्रीमहानिशीथमपि त्यक्त, तथा सम्प्रति परम्पराऽऽगमनिर्युक्त्यनुगमयो. प्रतिपादकत्वेन परम्पराशून्यैर्निर्युक्त्याद्यर्थ सर्वैरपि उत्सूत्रभाषिभिर्निज २ मार्गदूषकमनुयोगद्वारमपि त्यक्तमभविष्यत्। परम्पराया अभावे परम्पराऽऽगमस्याप्यभावात्। 'ग्रामो नास्ति कुत सीमे'ति न्यायादिति गाथार्थ ॥७६॥

अथ निर्युक्तिभाष्यचूर्ण्यादीनां तीर्थकृद्भाषितानां व्युच्छिन्नत्वेन कथ तदाऽऽयत्तसूत्रव्याख्याऽऽचारादिप्रवृत्तिरिति पराऽऽशङ्कामुद्भाव्य तन्निराकरणमाह—

णिज्जुत्तिभासचूण्णी, जिणिंदभणिआ य जाउ वुच्छिन्ना।
ता वित्थरत्थमुत्ता, अण्णह सुत्तत्थवुच्छेओ ॥ ७७ ॥

व्याख्या—याश्च निर्युक्तिभाष्यचूर्णयो जिनेन्द्रभाषिता सम्प्रति व्युच्छिन्ना, ता विस्तरार्थमुक्ता मन्तव्या। न पुन र्मूलतोऽपि। बाधकमाह-'अण्णहे'त्यादि। अन्यथा मूलतोऽव्युच्छेदाभ्युपगमे सूत्रार्थस्यापि व्युच्छेद स्यात्, तस्य निर्युक्त्यात्मकत्वात्। तच्च 'सुत्तथो खलु पढमो' इत्यादि प्रागुपदर्शित

मेव । न च देशेन व्युच्छेद तदुच्छेदभणनमयुक्तमिति शङ्कनीय, सर्वेषामपि तीर्थकृता द्वादशाङ्ग्या आदिकरत्वानुपपत्तिप्रसक्ते । केषाचित् तीर्थप्रवृत्तिकाले द्वादशाङ्ग्या देशेनैव व्युच्छिन्नत्वादिति सम्यक् पर्यालोच्यम्। किञ्च–यदि पौर्णिमीयकादय 'अप्पगथ महत्थ'मित्यादिसूत्रलक्षणमनास्यत्, तर्हि श्रीमहानिशीथे चतुर्दशीशब्दो वर्तते, न पुन पाक्षिकशब्द इत्यादिक नावदयत्। चतुर्दशीपाक्षिकशब्दयो पर्यायवाचित्वेन इन्द्र शक्र इत्यादि वदर्थत पुनरुक्तताया अपरिज्ञानात्। एव लौम्पकोऽपि उपासकदशाङ्गे परतीर्थिकपरिगृहीतचैत्यानामकल्प्यतवोक्ता, न पुन क्वापि स्वतीर्थिकपरिगृहीतचैत्याना कल्प्यतेति नावक्ष्यत्। देवदत्तो दिवा न भुङ्क्त इत्यर्थादापन्नस्य रात्रिभोजनस्य, रात्रौ भुङ्क्ते इतिशब्देन साक्षाद्भणने पुनरुक्ततावत् अर्थादापन्नाया स्वतीर्थिकपरिगृहीतचैत्याना कल्प्यताया साक्षात्शब्देन भणने पुनरुक्तता स्यात्। सा च दशमो दोष गणधरकृते सूत्रे न सम्भवति, सूत्रदोषाऽपरिज्ञानेन सूत्रकरणेऽनधिकारापत्ते । तथा निर्युक्त्याद्यनङ्गीकारोऽपि नाभविष्यत्, अल्पग्र थमहार्थताया अन्यथानुपपत्त्या निर्युक्त्याद्यङ्गीकारस्याऽऽवश्यकत्वात्। अन्यथा सूत्रलक्षणभङ्गेन सूत्रमेव न स्यात्। एतेन सूत्रेऽविद्यमान कुतस्तद् वृत्तौ भणितमिति शङ्कापि परास्ता। निर्युक्त्यादिकमन्तरेण 'सुत्तत्थो खलु पढमो, बीओ णिज्जुत्तिमीसओ भणिओ' इत्यादि व्याख्यानविधिविलोपापत्तेरित्यादि स्वयमेव पर्यालोच्यमिति गाथार्थ ॥ ७७ ॥

अथ प्रसङ्गत साम्प्रतीनाना लोकोत्तरमिथ्यादृशामुत्पत्ति-स्वरूपमाह—

तत्थवि केई तित्था, निग्गिया केई सय समुप्पण्णा ।
मुच्छिअणाडिमुच्छिम कप्पा स वेवि अव्वत्ता ॥ ७८ ॥

व्याख्या—तत्रापि सम्प्रति प्रसिद्धलोकोत्तरमिथ्यादृष्टिष्वपि, केचिद्दिगम्बर–पौर्णिमीयकौष्ट्रिक पाशचन्द्रीयनामानश्चत्वारोऽपि जैनाऽऽभासमार्गा तीर्थादनन्तरनिर्गते शिवभूति–चन्द्रप्रभाऽऽचार्य जिनदत्ताऽऽचार्य पाशचन्द्रनामभिर्व्यवस्थापितत्वेन तीर्थादनन्तरनिर्गता । आञ्चलिक सार्द्धपौर्णिमीयकाऽऽगमिकनामानस्त्रयोऽपि पौर्णिमीयकनिर्गतैर्नरसिंहोपाध्याय सुमतिसिंहाचार्य-शीलदेवनामभिर्व्यवस्थापितत्वेन तीर्थात् परम्परविनिर्गता । केचिच्च लौम्पक कटुक वन्ध्यनामानस्त्रयोऽपि स्वयमेव समुत्पन्ना, साक्षात्परम्परया वा तीर्थस्पर्शस्याप्यभावात् । तत्र वन्ध्यो लौम्पकाद्विनिर्गत इति विशेषो बोध्य । अथ तेषा क्रमेण स्वरूपमाह—'मुच्छिअणाडी'त्यादि । मूर्च्छिता–मूर्च्छामापन्ना सहसा अलभ्यमाना नाड्यो येषा ते मूर्च्छितनाडय । ते च सम्मूर्च्छिमाश्च मूर्च्छितनाडिसम्मूर्च्छिमा, प्राकृतत्वाद् व्यञ्जनलोपो द्रष्टव्य । अत एव सर्वेऽप्यव्यक्ता –व्यक्तचेतनारहिता, तेनैव तीर्थंकर देव वदतामपि तेषा तीर्थकरव्यवस्थापिततीर्थप्रतिपक्ष-भूतमार्गाणा प्ररूपणाया सम्भवात् । अय भाव –नवीनमार्ग-प्ररूपणावसरे मिथ्यात्वबाणप्रहतानां अनन्तससारवृद्धिलक्षण-मरणाभिमुखत्वेन अलभ्यमानसम्यक्त्वनाड्यो मूर्च्छितनाडय' ।

त चाऽव्यक्तचेतना एव भवन्ति । एतच्च तीर्थादन्तरनिर्गतानां शिवभूति चन्द्रप्रभाचार्य जिनदत्ताचार्य-पाशचन्द्रानधिकृत्यैवोक्त मवसातव्यम् । तेषां हि पूर्वं तीर्थान्तर्गतत्वेन व्यवहारत सम्यक्त्वनाशात् । तेन नवीनमार्गप्रवर्तनावसरे तीर्थस्य हृदये सदृक्षनात् । अत एवाल्म्यमानसम्यक्त्वा । तदपत्यानां तु मूलतोऽपि सम्यक्त्वप्राणराहित्येन मृतजातकल्पत्वात् । तेन तेषां च न प्रथमभेदोऽपि । सम्मूर्च्छिमास्तु मूलतोऽपि सञ्ज्ञिचेतनारहिता, अगर्भजातत्वात् । पर केषांचित् दुर्बलधर्माणां सम्यक्त्ववान्तिहेतुत्वेन कृमिविशेषगण्डोल्फकल्पा मन्तव्या । अव्यक्तत्वं च सर्वेषामपि विशिष्टचेतनाराहित्येन समानमेव । एतच्च प्रागने कधा दर्शितमिति । एतेन केचिद् भस्मग्रहमाहात्म्यात् । श्रीमहावीरप्रवस्थापित तीर्थं व्युच्छिन्नमपि आस्माकीनमार्गप्रवर्तकै श्रीमहावीरभाषितसिद्धान्तादुद्धृतमिति वदन्तोऽपि निरस्ता बोध्या । व्युच्छिन्नतीर्थोद्धारस्य केनचिदपि कर्तुमशक्यत्वात् । एतच्चाऽश्रुतवाकेवल्यधिकारे भगवत्यामपि प्रतीतमेव । नह्यरास लेऽयकमात्रेण गृहस्वामी जायमान कोऽपि केनापि दृष्ट श्रुतो वा ?। किञ्च-व्युच्छिन्ने तीर्थे साध्वादीनामप्यभावात् सिद्धान्तपुस्तकमेव न स्यात् । प्रयोजनाभावेन पुस्तकस्य कारकरक्षकयोरभावात् । न च द्रव्यलिङ्ग्यायत्त सिद्धान्तपुस्तकमासीदिति वाच्यम् । द्रव्यलिङ्गिनामपि तदानीमभावात् । तेषां च निह्नवानामिव तीर्थाऽविनाभावित्वात् । नहि ज्ञातिमर्यादां विना अयं ज्ञातिबहिरिति वक्तुं शक्यते । प्रयोजनं च पुस्तकस्य अगृहीतसिद्धान्त

सकेतकानामल्पप्रनायता गुरुसमीप सन्नेनग्रहनिमित्तकत्व, गृहीत सिद्धातसकेतकाना साधूना च म य कस्यचित्तथाविधनाना वरणीयक्षयोपशमाभावजयसशयादिनिरासार्थं सस्कारोद्बोधकत्वमेव। स च सस्कारोऽपि सङ्केतनानजय । सङ्केतस्तु सर्वेनमूलकोऽपि गुरुशिष्यक्रमाऽऽयत्त एव स्यात्। साधोरभावे च कस्य सस्कारोद्बोधकत्व कस्य या सङ्केतग्र निमित्तकत्व भवेत्। 'ग्रामो नास्ति कुत सीमेति न्यायात्। एतेन पुस्तकस्य ज्ञान जनकत्वमेव प्रयोजनमिति वक्तापि निरस्तो बोध्य । पुस्तकस्य सिद्धान्तसङ्केतग्रहजनकत्वाभावेन ज्ञानजनकत्वाभावात । नहि पट्टकाऽऽलिखितजम्बूद्वीपान्तिवर्तिवर्ष वर्षधर नदी ह्रदादीना परि ज्ञानमगृहीतसङ्केतकस्य कस्यापि जायमान दृष्ट श्रुत वा, प्रत्यक्षबाधात्। सङ्केतग्रहस्तु, गुर्वायत्त एव । गुरुत्व च शिष्य त्वाऽविनाभावीति प्राक् प्रदर्शितम । तेन गुरोरपि सङ्केतग्रहो निजगुर्वायत्त एव । एव च तावद् वक्तव्य, यावत् सर्वज्ञ श्री महावीर इति। एतेन सर्वेऽपि मार्गा जैनधर्मबुद्धया प्रवर्तमाना तीर्थङ्कराज्ञाऽऽराधका एव भवति । आशयस्य शुद्धत्वादिति निजमतिकल्पनाऽपि परास्ता। जैनाऽऽभासानामनुपपत्तिप्रसक्ते । किंच—आज्ञाविराधकाना शुभाध्यवसायो दूरे, प्रत्युताऽनन्तानु बन्धिन एव कषाया भवति । तदागम —'जे ण गोयमा ! आणाविराहगे, से ण अणताणुबधी कोहे, से ण अणताणुबधी माणे, से ण अणताणुबधी केअवे, से ण अणताणुबधी लोहे'-

इत्यादि श्रीमहानिशीथपञ्चमाध्ययने। एतदपि सम्यक् पर्यालोच्यमिति गाथार्थ ॥७८॥

अथ क्रमप्राप्त लौकिकमिथ्यात्व विवेचयन्नाह—

लोयमिच्छत्त पुण, सरूवभेएण हुज्ज चउभेअ।
अभिगहिअ१ मणभिगहिय२, ममइय३ तह अणाभोग ।।७९।

व्याख्या-लौकिकमिथ्यात्व पुन स्वरूपभेदेन भिन्न भिन्नस्वरूपेण चतुर्विध चतु प्रकार भवति। तथाहि आभिग्रहिक १ अनाभिग्रहिक २ साशयिक ३ अनाभोग ४ च। तथेति समुच्चये। तत्राऽऽभिग्रहिक सुगतेश्वरादिव्यक्तनामादिभिर्नियतानामदेवादीना देवत्वाभिना श्रद्धानात्मक। यदुक्त—

'अदेवे देवबुद्धिर्या, गुरुधीरगुरौ च या।

अधर्म धर्मबुद्धिश्च मिथ्यात्व तद्विपर्यया ॥१॥'दिति [योग शास्त्रम्]। अनाभिग्रहिक तु सर्वाण्यपि दर्शनानि शोभनानीति श्रद्धानात्मक गोपालादीनामिव। यत्तु केचिज्जैनमार्गमाश्रिता अपि कालानुभावात् अनाभोगवशेन यान्तोऽर्हद्देवादितत्त्ववादिनस्ते सर्वेऽपि शोभना एवेति श्रद्धानभाज ,ते सर्वेप्यनाभिग्रहिकविशेषा मन्तव्या। जैनमार्गमाश्रितत्वेन सम्यग्दृशामपि तेषाञ्चिन सम्यक्त्वनाशहेतुत्वात्। तथा साशयिक स्वस्वाभिमतमार्गव्यवस्थापनपरायणानि सर्वाण्यपि दर्शनानि शोभनानि उत कतिचित् किंचिद् वेत्यध्यवसायात्मकम्। तथाऽनाभोग अनाभोगेन निवृत्तमनाभागम। ननु भो! अनाभोगो मिथ्यात्व कथ स्यात्? सम्यग्दृशामपि सत्त्वादिति चेत्। सत्य, न हि

सर्वाऽप्यनाभोगो मिथ्यात्वमिति ब्रूम, किंतु यो ह्यज्ञा-समानाधिकरण सोऽनाभोगो मिथ्यात्व। ज्ञानसमानधिकरणस्तु द्व्यम्थलाभिव्यनक्त सन् क्वचिदतिचाररूपोऽपि स्यादिति तात्पर्यमिति गाथार्थ ॥ ७९ ॥

अथ पचानामपि मिथ्यात्वाना व्यक्तत्वाव्यक्तत्वाभ्या विवेकमाह—

**तत्थवि जमणाभोग, अव्वत्त सेसगाणि वत्ताणि।**
**चत्तारिवि ज णिअमा, सण्णाण हुंति भव्वाण ॥८०॥**

व्याख्या—तत्रापि पञ्चस्वपि मिथ्यात्वेषु अनाभोगो मिथ्यात्वमव्यक्त, देवगुरुधर्मविषयकव्यक्तचेतनाशून्यत्वात्। शेषाण्येव शेषकानि आभिग्रहिकादीनि चत्वार्यपि व्यक्तानि,देवादिविषयकव्यक्तचेतनाघटिताध्यवसायारमकत्वात्। तत्र हेतुमाह—यत्—यस्मात् कारणात्, नियमेन निश्चयेन, सज्ञिनामपि भव्यानामेव भवति, न पुनरभव्यानामपि। तेषा तु कदाचित् कुलाचारवशेन व्यवहारतो व्यक्तमिथ्यात्वे सम्यक्त्वे वा सत्यपि, निश्चयत सर्वकालमनाभोगमिथ्यात्वमेव भवति। तेन ते चाभव्या व्यावहारिकत्वादिव्यपदेशभाजोऽपि न भवन्ति। तेषा चानादित सर्वकाल चतसृष्वपि गतिषु पुन पुन परावर्त्तनेन परिभ्रमणात्। एतच्चाग्रे व्यक्तीकरिष्यते। व्यक्तमिथ्यादृशा तु तथाभव्यत्व योगेन कदाचित् केषाञ्चित् क्रियावादित्वाभिव्यञ्जक कर्मवादित्वमपि भवति। कर्मवादित्व च धार्मिकानुष्ठानजयो मोक्षो, नान्यथेत्यध्यवसायरूपमेव। यदुक्त—'य एव कर्मवादी स एव

क्रियावादी' त्याचाराङ्गप्रथमाध्ययनवृत्तौ । तथ कालेश्वरादि-कृतमेव सर्वमितिरादिना न सम्भवन्ति, कालेश्वरान्किकृतत्वेन कर्मवादित्वाभावात । क्रियावादिना चोत्कर्षतोऽप्येकपुद्गल परावर्तनावेव ससारो भवतीति गाथार्थ ॥८०॥

अथान्तरोक्तमिथ्यादृगभव्याना भेद तन्मध्यधिकाल च गाथाद्वयेन विभजिषु प्रथमगाथामाह–

भव्वावि अववहारिअ-ववहारिअभेअओ दुविगप्पा ।
अववहारिअकालो, अणतपुग्गलपरावट्टा ॥८१॥

व्याख्या–भव्या अपिरेवार्थे, भव्या एव अव्यावहारिक व्यावहारिकभेदतो द्विविकल्पा -द्विभेदा, केचिद् भव्या अव्यावहारिका केचिच व्यावहारिका इत्यर्थ । तत्राव्यवहारिकाणा काल -ससारस्थितिकाल अनन्तपुद्गलपरावर्ता – अनन्तपुद्गलपरावर्तकाल यावत् ससारावस्थितिरनादित्वादिति गाथार्थ ॥८१॥

अथ द्वितीयगाथामाह–

ववहारीण णिअमा ससारो जेसि हुज्ज उक्कोसो ।
तेसिं आवलिअअसख भागसमपुग्गलपरट्टा ॥८२॥

व्याख्या–व्यावहारिकाणा तुर्गम्य, व्यावहारिकाणां तु नियमात् निश्चयेन, येषामुत्कृष्ट ससारो भवेत्, तेषामाव लिकाऽसख्येयभागसमयप्रमाणपुद्गलपरावर्ता । यदुक्त–

'अव्ववहारिअमज्झे, भमिऊण अणतपुग्गलपरट्टे ।
कहवि ववहाररासिं, सपत्तो णाह ! तत्थवि अ ॥१॥

उक्कोस तिरिअगइ–असन्नि एगिंदि–वण णपुंसेसु ।
भमिओ आवलिअअसंख भागसमपुग्गलपरट्टे ॥२॥

इति कायस्थितिस्तोत्रे । आवलिका च कालविशेष प्रवचने प्रतीत । अत एवोत्कृष्टो वनस्पतिकालो य प्रवचने एतावानेव भणित । स च व्यावहारिकभव्यानधिकृत्यैवोक्तोऽवसातव्य । तथाहि-'वणस्सइकाइआ ण पुच्छा, जहण्णेण अंतोमुहुत्त, उक्कोसेण अणत काल, अणता उस्सप्पिणीओसप्पिणी कालओ, खित्तओ अणता लोगा असखेज्जा पुग्गलपरट्टा' इति प्रज्ञापना १८पदे । यदि चेद सूत्र साव्यवहारिकजीवापक्ष न स्यात्, तर्हि सर्वेषामपि भव्याना मुक्तिसिद्धौ मुक्तिपथव्यवच्छेद प्रसज्येत, तावत्काल प्रमाणाना भव्याना परिमितत्वात् । अत एव प्रज्ञापनावृत्तिकृता साव्यवहारिका असाव्यवहारिकाश्चेति राशिद्वय युक्त्या समर्थित । तथाहि—'सकाइए दुविहे प० त०–अणादीए वा अपज्जवसिए १, अणादीए वा सपज्जवसिए २'त्ति प्रज्ञापना १८ पदे । एतद्वृत्तिर्यथा तत्र य ससारपारगामी न भविष्यति सोऽनाद्यपर्यवसित , कदाचिदपि तस्य कायव्यवच्छेदासम्भवात् । यस्तु मोक्षमधिगन्ता सोऽनादिसपर्यवसित , तस्य मुक्त्यवस्था-सम्भवे सर्वात्मना शरीरपरित्यागादि'त्यादि यावत् । किंचैव यावत् वनस्पतीना निर्लेपनमागमे प्रतिषिद्ध, तदपीदानीं प्रसजत । कथमिति चेत् । उच्यते–इह हि प्रतिसमय असख्येया वनस्पतिभ्यो जीवा उद्वर्तन्ते, वनस्पतीना च कायस्थितिपरिमाणमसख्येया पुद्गलपरावर्ता , ततो यावन्तोऽसख्येयेषु पुद्गल-

परावर्तेषु समयात्तैरप्यस्ता एकसमयोद्वृत्ता जीवा यावन्तो भवन्ति, तावत परिमाणमागत वनस्पतीनां । तत प्रतिनियतपरिमाणतया सिद्ध निर्लेपन, प्रतिनियतपरिमाणत्वात् । एव च गच्छता कालेन सिद्धिरपि सर्वेषा भव्यानां प्रसक्ता । तत्प्रसक्तौ च मोक्षपथव्यवच्छेदोऽपि प्रसक्त, सर्वभव्यसिद्धिगमनानन्तर भव्यस्य सिद्धिगमनाऽयोगात । आह च—

'कायठिई कालेण, तेसि मसखेज्जयाववहारेण ।
णिल्लेवणमावण्ण, सिद्धीवि य सव्वभव्वाण ॥१॥
पइसमय ससखेज्जा, जेणुवट्टं ति तो तदव्वमत्था ।
कायट्ठिइए समया, वणस्सईण च परिमाण' ॥२॥

न चैतदस्ति, वनस्पतीनामनादित्वस्य निर्लेपनप्रतिषेधस्य सर्वभव्यासिद्धेर्मोक्षपथाव्यवच्छेदस्य च तत्र तत्र प्रदेशे सिद्धान्तेऽभिधानात् । उच्यते इह द्विविधा जीवा साव्यवहारिका असाव्यवहारिकाश्च । तत्र ये निगोदावस्थात उद्वृत्त्य पृथ्वीकायादिभेदेषु वर्तन्ते, लोके दृष्टिपथमागता सन्त पृथ्वीकायादिव्यवहारमनुपतन्तीति साव्यवहारिका उच्यन्ते । ते च भूयोऽपि निगोदावस्थामुपयान्ति, तथापि ते साव्यवहारिका एव । सव्यवहारे पतितत्वात् । ये पुनरनादिकालादारभ्य निगोदावस्थामुपगता एवावतिष्ठन्ते, ते व्यवहारपथातीतत्वादसांव्यवहारिका । कथमतदवसीयते ? द्विविधा जीवा सांव्यवहारिका असाव्यवहारिकाश्चेति । उच्यते-युक्तिवशात । इह प्रत्युत्पन्नवनस्पतीनामपि निर्लेपन प्रतिषिद्ध, किं पुन सकलवनस्पतीना, तथा भव्या-

नामपि । तच्च यद्यसाव्यवहारिकराशिनिपतिता अन्यन्तवनस्पतयो न स्यु, तत कथमुपपद्यते । तस्मादवसीयते–अस्त्यसाव्यवहारिकराशिरपि, यद्गताना वनस्पतीनामनादिता । किञ्चेयमपि गाथा गुरूपदेशादागता समये प्रसिद्धा—

'अत्थि अणता जीवा, जेहिं ण पत्तो तसाइपरिणामो ।
तेवि अणताणता, णिगोअवास अणुवसति' ॥१॥

इति प्रज्ञापनावृत्तौ । तथा पूर्वाचार्यवचमाऽपि राशिद्वय सिद्ध्यति । यदाह श्रीजिनभद्रगणिक्षमाश्रमण —

'सिज्झति जत्तिआ न्रि, इह सववहारजीवरासीओ ।
इ ति अणाइवणस्सइ रासीओ तत्तिआ तम्मि' ॥१॥

त्ति विशेषणवत्या । तथा चिन्तामणिम न्त्रस्तोत्रेऽपि–'एव महाभयहर'मित्यादिगाथावृत्तौ भर्वान्ति गुणभाजनमिति भव्या – सिद्धिगमनयोग्या, ते चाव्यवहारिकनिगोदा अपि भवेयु । सन्ति हि ते जगति भव्या, ये कदाचिदपि न सेत्स्यन्ति । तथा च वृद्धा —

'सामग्गिअभावाओ, ववहारिअरासि अप्पवेसाओ ।
भव्वावि ते अणता, जे सिद्धिसुह ण पाविति' ॥१॥

न प्राप्स्यन्तीत्यर्थ । अतस्तद्व्यवच्छेदार्थमाह जायन्ते व्यावहारिकराशाविति जना, भव्याश्च ते जनाश्च ते भव्यजना, तेषां हर्षोत्पादक कल्याणपरम्पराया निधानम(मि)त्येत्यादि । एवच प्राप्तव्यवहारराशीना नियमेन सिद्धिगमन भवत्येवेति सिद्धमवसातव्य । अत्र हि प्रज्ञापनावृत्तिकर्तुरभिप्रायेण सूक्ष्मपृथिव्यादिजीवा निगोद-

जीवाश्च असांव्यवहारिका, अन्यथा प्रत्येकशरीरिणो व्यावहारिका इत्येवोक्तमभविष्यत्। यत्तु 'केचन निगोदेभ्य उद्धृत्य पृथिवीकायादिभवेषु वर्तन्ते' इत्यादि भणितं, तत् सूक्ष्मपृथिव्यादिजीवानामप्यपेक्षयैवावगन्तव्यं असांव्यवहारिकत्वाद्वा अविवक्षणादिति सम्भाव्यते। सम्यग् निश्चयस्तु बहुश्रुतगम्य इति। एवं चासांव्यवहारिका जीवा सूक्ष्मपृथिव्यादिषु निगोदेषु च सर्वकालं गत्यागती कुर्वन्तीति सम्पन्नं। एतदर्थसंवादिका च प्रज्ञापनासारोद्धारवृत्तिरपि। तथाहि—

'असंखोसप्पिणिउस्सप्पिणीओ, एगिंदिआण य चउण्ह।
ता चेव अणंताओ, वणस्सइए अ बोद्धव्वा'॥१॥

इति गाथावृत्तौ। 'अनादिसूक्ष्मनिगोदेभ्य उद्धृत्य शेषजीवराशिषूत्पद्यन्ते, ते पृथिव्यादिविविधव्यवहारयोगात् सांव्यवहारिका' इति भणितम्। तेनाऽनादिसूक्ष्मनिगोदजीवा असांव्यवहारिण इत्यत्र समासविधिरेवं-सूक्ष्माश्च पृथिव्यादयश्चत्वार, निगोदाश्च सूक्ष्मबादरसाधारणवनस्पतय, न विद्यते आदिर्येषां तेऽनादय अप्राप्तव्यवहाराश्च इत्यर्थ। तथा च सूक्ष्माश्च निगोदाश्चेति द्वन्द्व, अनादयश्च ते सूक्ष्मनिगोदाश्चेति कर्मधारय। यदि च सर्वत्रापि कर्मधारय क्रियते, तदा बादरनिगोदजीवा व्यवहारिण सम्पद्येरन्। तथा न भवति। यतो बादरनिगोदजीवेभ्य सिद्धा अनन्तगुणा वक्तव्या स्यु। तत्कथं? इतिचेत्। उच्यते यतो यावन्त सांव्यवहारिकराशित सिद्ध्यन्ति, तावन्त एव जीवा असांव्यवहारिकराशेर्विनिर्गत्य सांव्यवहारिकराशावा

गच्छन्ति। यदाह—'सिज्झति जत्तिआ किरे'त्यादि प्राक् प्रदर्शित मेव। एवं च व्यवहारराशित सिद्धा अनन्तगुणा एवोक्ता। तत्र यदि बादरनिगोदजीवाना व्यावहारिकत्वं भवति, तर्हि बादरनिगोदजीवेभ्य सिद्धा अनन्तगुणा एव सम्पद्येरन। सन्ति च सिद्धेभ्यो बादरनिगोदजीवा अनन्तगुणा, तेभ्य सूक्ष्मजीवा असंख्येयगुणा। यदागम —'एएसि ण भंते! जीवाण सुहुमाण१ बायराण२ णो सुहुमाण णो बायराण३ कयरे २ हिंतो अप्पा वा बहुया वा ४। गो० सव्वथोवा जीवा णो सुहुमा णो बायरा, बायरा अणतगुणा, सुहुमा असखेज्जगुणा' इति प्रज्ञा०पद १८। वृत्तिर्यथा—'एएसि ण भंते। जीवाण सुहुमाण'मित्यादि। सर्वस्तोका जीवा 'णो सुहुमा णो बायरा' सिद्धा इत्यर्थ। तेषा सूक्ष्मजीवराशेर्बादरजीवराशेश्च अनन्ततमभागकल्पत्वात्। तेभ्यो बादरा अनन्तगुणा, बादरनिगोदजीवाना सिद्धेभ्यो अनन्त गुणत्वात्। तेभ्यश्च सूक्ष्मा असंख्येयगुणा, बादरनिगोदेभ्य सूक्ष्मनिगोदानामसंख्येयगुणत्वादि'ति। एव चाऽऽगमबाधा स्फुटैव। तेन 'ग्रन्थस्य ग्रन्थान्तर टीके'तिवचनात् सर्वज्ञमूलकाऽऽगमाऽनाबाधयैव व्याख्यान युक्तमिति। तत्र सूक्ष्मपृथिव्यादीनां निगोदाना चाऽनादित्वमव्यवहारराश्यपेक्षया मन्तव्यम्। प्राप्तव्यवहारराशीनां तु जीवाना सूक्ष्मपृथिव्यादिनिगोदपर्यन्ताना सर्वेषामपि सादित्वमेव स्यात्। यद्यपि प्रत्येकशरीरिण सूक्ष्म पृथिव्यादयोऽव्यवहारिण इति क्वाप्यागमे साक्षान्नोक्त, तथापि अनन्तरोक्ताऽऽगमबाधानुरोधव्यवहारित्ववचनेऽपि न

किञ्चिद् बाधकम् । प्रज्ञापनावृत्त्यभिप्रायेण च युक्त्या तथा भणने न कश्चिद्दोष, प्रकारान्तरेणाऽऽगमबाधाया अनपायात । ननु भो । काश्चन युक्तयोऽसमीचीना अपि भवन्ति, तेन कथं तद्गम्ये वस्तुनि सम्यग् विश्वास ? इति चेत् । नैवं तर्हि धूमादिहेतुगम्ये वह्न्यादिवस्तुन्यपि सम्यग् विश्वासानुपपत्तिप्रसक्ते, केषाञ्चिद्धेतूनामप्यसमीचीनत्वात् । एवमागमगम्येऽपि वस्तुनि वक्तव्य प्रसज्येत, आगमानामपि केषाञ्चिद्-समीचीनत्वात् । तस्माद्यथा व्यभिचारादिदोषदुष्टहेतवोऽप्यहेतव एव, विवक्षितवस्त्वसाधकत्वात । इतरे तु हेतव एव । यथा वा सर्वज्ञमूलकाऽऽगमबाधित आगमोऽप्यनागम एव, अयथार्थ-वस्तुवाचकत्वात् । इतरस्तु आगम एव, यथार्थवस्तुवाचकत्वात् । एव युक्तिरपि बलवद्युक्तिबाधिता न युक्ति, किन्त्वबाधितैव । तस्यास्त्वबाधितत्वपरिज्ञानायानुमानप्रयोगो यथा बादरनिगोदजीवा न व्यवहारिण, तेषा सिद्धेभ्योऽनन्तगुणत्वात्, यथा सूक्ष्मनिगोदजीवा । तथा अनादिमन्त सूक्ष्मा बादराश्च निगोदजीवा अव्यवहारिण एव, अन्यथा व्यवहारित्वभवनसिद्धि-गमनयोरपर्यवसितत्वानुपपत्ते । अपर्यवसितत्व च 'सिज्झन्ति जत्तिया किर' इत्यादिगाथोक्तप्रमाणावसातव्यम् । तथा सा व्यवहारिका जीवा नि यमेन, आवलिकाऽसङ्ख्येयभाग(सम) पुद्गलपरावर्त्त समयपरिमाणत्वेन परिमितत्वात, व्यतिरेकव्याप्त्या सिद्धा निगोदजीवाश्च दृष्टान्ततयावसातव्या । प्रज्ञापनावृत्तिसम्मति रवसातव्या । अय भाव –आवलिकाऽसङ्ख्येयभागपुद्गलपरा

वतसमयप्रमाणा व्यवहारिणो जीवा भवन्ति । निदान तावत तावता कालेन तथाभव्यत्वयोगेन यथासम्भव सर्वेषामपि व्यव-हारिणा नियमेन सिद्धिगमनमेव । एव च प्रकृते बाधकयुक्तेरेवा भावाद् युक्तिगम्ये वस्तुनि सम्यगविश्वासो युक्त एव । अत एव प्रज्ञापनावृत्तिकृतापि युक्तिपुरस्कारेणैव राशिद्वय व्यवस्थापित प्राक् प्रदर्शित । तत्र युक्तेर्व्याप्तिरूपता चैव यथा अन्यत्र पर्वते वह्नि धूमान्यथानुपपत्ते । एवमस्तीह अव्यवहारराशि, व्यव हारित्वभवनसिद्धिगमनयोरपर्यवसितवान्यथानुपपत्ते । अत एवा-ऽऽगमतुल्यैव युक्तिरपि मन्तव्या । यदागम —

'त तह वक्खाणिउन, जहा जहा तस्स अवगमो होइ ।
आगमिअमागमेण, जुत्तीगम्म तु जुत्तीए' ॥१॥ति पञ्चवस्तुके।

एतेन बादरनिगोदजीवप्रभृतय सर्वेऽपि जीवा अनादि सूक्ष्मनिगोदेभ्यो निर्गता सन्त एव साव्यवहारिकव्यपदेशभाजो भवन्तीति पराकूतमपि परास्त। सर्वेषामपि जीवाना सिद्धिप्राप्ति-प्रसक्तौ ससारस्थितेरुच्छेदापत्ते । तत्कथ? इति चेत् । उच्यते यावन्त सिद्ध्यन्ति तावन्त एवाव्यवहारराशितो निर्गत्य व्याव हारिका भवन्ति । एव च तथाभव्यत्वयोगेन यथासम्भव सर्व-कालमसाव्यवहारिकजीवराशेर्विनिर्गत्य व्यावहारिकभवनेन व्यावहारिकजीवराशेश्च सिद्धभवनेन असाव्यवहारिक जीवराशे र्हान्या सिद्धाना च वृद्धया तात्त्वस्व्याभाव एव । तात्त्वस्व्य च व्यावहारिकजीवाना सख्यामधिकृत्यैव मन्तव्यम् । यदि च बादरनिगोदजीवा व्यावहारिका उच्यन्ते, तर्हि सूक्ष्मबादर-

निगोदजीवेभ्य सिद्धा अनन्तगुणा एव सम्पद्येरन्। एतच्चा-सम्भवि, तावता जीवानामेवाभावात्। सिद्धाश्च सर्वकाले-नाप्येकस्य निगोदस्यानन्ततमभागवर्तिन स्यु। यदुक्त—

'जइआ होही पुच्छा, जिणाण मग्गमि उत्तर तइआ।
इक्कस्स णिगोअस्स य, अणतभागो य सिद्धिगओ' ॥१॥त्ति।

तथा च सिद्ध सूक्ष्मबादरनिगोदेष्वेव सर्वकाल व्यवहारिणा स्थिति। व्यावहारिकाणा तु सामान्यत सर्वकाल ताद-वस्थ्येऽपि विशेषत प्रतिजीवमुत्कर्षत आवलिकाऽसख्येयभाग-पुद्गलपरावर्तस्थिति। तत उर्ध्वं नियमात् सिद्धिरेव तेषा भवेत्। तत्र सम्मतिस्तु प्रागुपदर्शितैव। यत्तु क्वचिदाधुनिकप्रकरणादौ प्रज्ञापनाद्यागमविरुद्धानि वचनानि भवन्ति। तच्च तीर्थान्त वर्तिनामसद्ग्रहाभावादनाभोग एव कारणम्। अनाभोगस्तु महतामपि भवति, तस्य च छद्मस्थमात्रस्य सत्त्वेन छद्मस्थलिङ्ग त्वात्। यदुक्त—

'न हि नामाऽनाभोगश्छद्मस्थस्येह कस्यचिन्नास्ति।
ज्ञानावरणीय हि, ज्ञानावरणप्रकृति कर्म' ॥१॥इति। तीर्थबाह्याना तु मिथ्यादृशामज्ञानमेव, तच्च सर्ववस्तुविषयकमिति अना भोगाऽज्ञानयोर्विशेषो बोध्य। ननु भो! सांव्यवहारिक-जीवानामनन्तपुद्गलपरावर्ता अपि सम्भवन्ति। आवलिका-ऽसख्येयभागपुद्गलपरावर्तान्तरितस्यापि भूयो भूय परिभ्रमण स्योक्तत्वात्। यदुक्त—एते च निगोदे वर्तमाना जीवा द्विधा, तद्यथा—सांव्यवहारिका असांव्यवहारिकाश्च। तत्र ये सांव्यव-

हारिकाम्ते निगोदेभ्य उद्धृत्य शेषजीवराशिमध्ये समुत्पद्यन्ते तेभ्य उद्धृत्य केचित् भूयाऽपि निगोदमध्ये समागच्छन्ति । तत्राप्युत्कर्षत आवलिकाऽसंख्येयभागगतसमयप्रमाणान् पुद्गलपरावर्तान् स्थित्वा भूयोऽपि शेषजीवेषु मध्ये समागच्छन्ति । एवं भूयोभूय साव्यवहारिकजीवा गत्यागती कुर्वन्तीति संग्रहणी वृत्ताविति चेत् । नैव भूयोभूय परिभ्रमणेऽपि उक्ताऽसंख्येयपुद्गलपरावर्तातिक्रमणस्याऽभावात् आवलिकाऽसंख्येयभाग पुद्गलपरावर्तानामसंख्येयत्वमेवेति ( प्रतीतौ ) कुतो भूयोभूय शब्देनाऽऽनन्त्यकल्पनाया गन्धोऽपि। तेन भूयोभूय परिभ्रमणेऽपि असंख्यातत्वं तु तदवस्थमेव । अत एतावता कालेन व्यावहारिकाणां सर्वेषामपि सिद्धिर्भणितेति प्रागुपदर्शितमिति गाथार्थः ॥८२॥

अथ साव्यवहारिकभव्यानामावलिकाऽसंख्येयभागपुद्गल परावर्तकालादूर्ध्वं किं स्यादित्याह–

तेण परं सिद्धिगई, तेसिं णिअमेण हुज्ज जिणभणिआ ।
जं ते पुणो वि अववहारित्तं नेव पाविंति ॥८३॥

व्याख्या—तेन–तत , परं–उक्तलक्षणकालादूर्ध्वं, तेषां–साव्यवहारिकाणां, नियमेन–निश्चयेन, सिद्धिगति मुक्तिलक्षणा पंचमगतिर्भवेत् । किंलक्षणा सिद्धिगति ? जिनभणिता–तीर्थंकरोपदिष्टा । तत्र सम्मतिस्तु प्रज्ञापनावृत्तिरेव । सा च प्राक् प्रदर्शिता । अथोत्तरार्द्धेन मुक्तिगमनं निश्चिनोति-'जं ते पुणो वी'त्यादि । यत् यस्मात्, ते व्यवहारिण , पुनरव्यवहारित्वं नैव

प्राप्नुवन्ति । अय भाव —व्यवहारिणा हि उक्ताऽसङ्ख्येयपुद्गल परावर्तकालादूर्ध्वं ससारस्थितिरव्यवहारित्वभवनेनैव स्यात् । अव्यावहारिकाणामेव अनन्तपुद्गलपरावर्तस्थितेर्भणितत्वात । तच्च व्यवहारिणा न भवत्येव, आगमे निषिद्धत्वात् । सम्मतिस्तु दर्शितैव। तस्मादुक्ताऽसङ्ख्येयपुद्गलपरावर्तकालादधिकमसाराव-स्थितिरसाव्यवहारिकत्वमन्तरेण न स्यादेव । अव्यवहारिकत्व तु व्यावहारिकाणा न भवत्येवेति परिशेषात् सिद्धिगतिगामिन एव भवन्तीति गाथार्थ ॥ ८३ ॥

अथ व्यवहारिष्वपि विशेषमाह—

तेसु वि एगो पुग्गल परिअट्टो जेसि हुज्ज ससारो ।
तहभव्वत्ता तेसिं, केसिंचि अ होइ किरिअरुई ॥८४॥

व्याख्या—तेष्वपि व्यवहारिष्वपि जीवेषु, येषामेकपुद्गल-परावर्तविशेष ससारो भवेत्, तेषा मध्ये तथाभव्यत्वात् तथा भव्यत्वयोगेन केषाचित्क्रियारुचि —मोक्षनिमित्तधार्मिकानुष्ठान-करणाभिप्रायो भवतीति गाथार्थ ॥ ९४ ॥

अथ क्रियारुचेश्चिह्नमाह—

तीए किरियाकरण, लिंग पुण होइ धम्मबुद्धीए ।
किरिआरुईणिमित्त, ज वुत्त वत्तमिच्छत्त ॥८५॥

व्याख्या—क्रियारुचेर्लिङ्ग चिह्न, पुनर्वह्नेर्धूमवत् क्रियाकरण मेव मुक्तिनिमित्तमिति गम्य । यत्तु स्वर्गादिप्राप्तिनिमित्त चन्द्र यादिपूजाप्राप्तिनिमित्त वा क्रियाया करणमभव्यानामपि भवति, तन्न क्रियावान्त्वाभिव्यञ्जक, मुक्तिप्राप्तिनिमित्त क्रिया

करणाभावात्। एतच्च व्यवहारत छद्मस्थगम्यत्वेन लिङ्गमवसातव्यम्। अथवा यथा क्रियारुचे कार्यं क्रियाकरण, तथा तस्या अपि कारण किं? इत्याह—'किरिआरुई'त्यादि। क्रियारुचेर्निमित्तकारण व्यक्तमिथ्यात्व यदनन्तरोक्त—'तत्थवि अमणाभोग'मित्यादिगाथायां भणित, उपलक्षणात् व्यक्तमिथ्यात्वमन्तरेण एकपुद्गलपरावर्तस्यापि भव्यस्य क्रियारुचिर्न भवति। तथा च क्रियाया कारण क्रियारुचि, क्रियारुचेश्च कारण व्यक्तमिथ्यात्वमेव। न चैवम् व्यक्तमिथ्यात्वापेक्षया व्यक्तमिथ्यात्व शोभन सम्पन्न क्रियारुचिहेतुत्वादिति शङ्कनीय, व्यक्तमिथ्यात्वस्य जैनप्रवचनविषयकविकल्पपरिणामात्मकत्वेन दीर्घस्थितिकमिथ्यात्वमोहनीयकर्मबन्धहेतुत्वात् सम्यक्त्वप्राप्ते प्रतिबन्धकत्वाच्च। अनाभोगमिथ्यात्वस्य सत्पर्यायेन सम्यक्त्वप्राप्तेर प्रतिबन्धकत्वमग्रे दर्शयिष्यते। पर सर्वत्राप्यनुक्तमपि तथा भव्यत्व कारणतया मन्तव्यमेव। तच्च तत्तज्जीवस्वभावोऽनादिसिद्ध एवेति गाथार्थ ॥ ८५ ॥

अथ क्रियावादिष्वपि विशेषमाह—

**तेसु वि अवड्ढपुग्गल परिअट्टो जेसि हुज्ज समारो।**
**सम्मत्तजोग्गयाए, लहंति ते केइ सम्मत्त ॥८६॥**

व्याख्या—तेष्वपि क्रियावादिष्वपि येषा भव्यानामपार्द्धपुद्गलपरावर्तावशेष ससारो भवेत्, तेषा सम्यक्त्वप्राप्तियोग्यतायां केचित् साक्षात् सम्यक्त्व लभन्ते। अय भाव —अपार्द्धपुद्गलपरावर्तावशेषससारस्य भव्यस्य सम्यक्त्वप्राप्तियोग्यता सम्पन्ना, पर

सम्यक्त्वमाप्ति तथाभव्यत्वमदृतकालादिसामग्रीयोगेन नानाप्रकारा भवति। तेन सम्यक्त्वप्राप्त्यनन्तरमपि कस्यचित् संसारोऽपार्द्धपुद्गलपरावर्तविशेषो भवति, तेषां तथाभव्यत्वस्य तथैवानादिसिद्धत्वात्, यावत् कस्यचिदन्तर्मुहूर्तविशेषोऽपि संसारो भवति, तत्कारणस्य तथाभव्यत्वस्य प्रतिभव्यं भिन्नत्वात्। तेन तदायत्तैव शेषकारणसामग्रीति गाथार्थः ॥८६॥

अथ सिद्धावलोकन्यायेन व्यवहारित्वमव्यवहारित्वं च कथं भवति? इति दर्शयति—

लोअववहारविसय, पत्तअसरीरमेव जेसिं सइ।
ते ववहारिअभव्वा, सेसा ववहारबाहिरिआ ॥८७॥

व्याख्या—लोकव्यवहारविषयं प्रत्येकशरीरं बादरपृथिव्यादिसम्बन्ध्येव भवति। तस्यैव इयं पृथिवी, इदं जलमित्यादिव्यवहारविषयत्वात्। कथं? 'सइ'ति। सकृदेकवारमपि भवेत्, येषां भव्यानां ते व्यावहारिकभव्याः, शेषा निगोदाः सूक्ष्मपृथिव्यादयश्च व्यवहारबाह्या अव्यावहारिकाः। सम्मतिस्तु 'इह द्विविधा जीवाः' इत्यादिरूपणमात्रं प्रदर्शितैवेति गाथार्थः ॥८७॥

अथाऽभव्यजीवाः सांव्यवहारिकाः उताऽसांव्यवहारिका वा? इत्याशङ्कायामाह—

तेण अभव्वजीवा, ण हुंति ववहारमाइवयविसया।
तं पुण पडिवडिआण, अणंतभागो अ सव्वेवि ॥८८॥

व्याख्या—येन कारणेन व्यावहारिका उत्कर्षतोऽप्यावलिकाऽसंख्येयभागपुद्गलपरावर्तकालान्नियमेन सिद्धिगतिगामिनो

भवन्ति, तेन कारणेनाऽभव्यजीवा सांव्यवहारिकादिवचोविषया - सांव्यवहारिकादिव्यपदेशविषया न भवन्ति। ते पुनरभव्या सम्यक्त्वप्रतिपत्तितानामनन्ततमभागवर्तित्वेन सर्वकालं भव्यानामिव व्यवहारित्वभवनासम्भवात्। ननु भो! व्यावहारिकत्वमपि सर्वजीवसाधारणमेवोक्तम्। यदुक्तम्—

'सर्वे जीवा व्यवहार्य व्यवहारित्या द्विधा।

सूक्ष्मनिगोदा एवान्त्यास्तेभ्योऽन्ये व्यवहारिण ॥१॥इति योगशास्त्रवृत्तौ। तेनाऽभव्या अपि भव्यवद् भवन्तिति चेत्। मैव, तत्र भव्यानधिकृत्यैव सर्वशब्दप्रयोगात्। ननु भो! एवमपि 'सूक्ष्मनिगोदा एवाऽन्त्या' इति भणनेन बादरनिगोदजीवा व्यवहारिणो भणिता। एवं च (व्यवहारराशितोऽपि) बादरनिगोदजीवेभ्य सिद्धा अनन्तगुणा एव सम्पद्येरन्। यावन्तो यस्मिन् समये सिद्ध्यन्ति तावन्त एव तस्मिन्नेव समये अव्यवहारराशितो व्यवहारराशावागच्छन्ति। यदाह **श्रीजिनभद्रगणि क्षमाश्रमण** –

'सिज्झति जत्तिया किर, इह मववहारजीवरासीओ।

इति अणाइवणस्सइ-रासिओ तत्तिया तम्मि ।१।त्ति विशेषणवत्या। तथा च संसारो भव्यविरहितस्तदानीमवाभविष्यत्। सूक्ष्मनिगोदजीवानामपि बादरनिगोदजीवेभ्योऽसंख्येयगुणत्वात्। भणितं च—सर्वकालेनापि एकस्य निगोदस्यानन्ततमभागो जीवा सेत्स्यन्तीति। यदुक्तं 'जइआ होहिइ पुच्छा' इत्यादि प्रागुक्तमिति परस्पराऽसंगति स्फुटैवेति चेत्। मैव, सूक्ष्माश्च

निगोदाश्चेतीतरेतरद्वन्द्वकरणे असंगतिदोषगन्धस्याप्यभावात् । एतच्च प्रज्ञापनासूत्रवृत्त्यभिप्रायेण प्राक् समर्थितमपि । सम्यग्जिनागमैः सैव वृत्तिः सम्यक् पर्यालोच्या । अयं भावः–व्यवहारित्वं प्राप्यापि केचिज्जीवा तथाभव्यत्वयोगेन व्यक्तमिथ्यात्वं वा सम्यक्त्वं वाऽप्राप्य क्रियावादित्वाभिव्यञ्जकक्रियाकारिणो भवन्ति । क्रियाकरणं हि क्रियावादित्वजन्यं भवति, न क्रियाजन्यं क्रियावादित्वं, क्रियावादित्वमन्तरेण तद्व्यञ्जकनानाक्रियाकरणे सामर्थ्याभावात् । एवं यथोक्तसंसारस्थितिरपि न क्रियाजन्या, न वा सम्यक्त्वजन्या । किन्तु एकपुद्गलपरावर्तावशेषसंसारस्य जीवस्य क्रियाकरणयोग्यतायां सत्यां कस्यचिन्मोक्षप्राप्त्यभिप्रायेण क्रिया भवति, कस्यचिच्च न भवति । प्राक्तन्यशुभाशुभगत्यनुसारेण कालादिसामग्रीजन्यकारणभूताया क्रियाया सम्पत्ते । एवमपार्द्धपुद्गलपरावर्त्तावशेषसंसारस्य जीवस्य सम्यक्त्वप्राप्तियोग्यतायां सत्यां तथाभव्यत्वयोगेन कस्यचित् सम्यक्त्वलाभो भवति, कस्यचिच्च नेति । अन्यथा क्रियाकरणानन्तरं सम्यक्त्वप्राप्त्यनन्तरं च एकपुद्गलपरावर्त्त अपार्द्धपुद्गलपरावर्तश्च संसारः क्रियावादिना सम्यग्दृशा च नियमेन भवेत् । क्रियाकरणात् सम्यक्त्वप्राप्तेश्च पूर्वमजातत्वात्, तयोर्जातयोश्च जातत्वात्, एतच्च न सम्भवति, मरुदेवीमेघकुमारादौ व्यभिचारात् । तेषां क्रियाकरणसम्यक्त्वप्राप्त्योरभावेऽपि अल्पसंसारस्य जातत्वात् । तस्माद्यथाप्रवृत्तकरणसहकृतेन प्रत्यासन्ननिष्ठभिन्नभिन्न[त्व]तथाभव्यत्वयोगेन सञ्जातयथोक्तसंसारो भवति ।

तथामूलं क्रियाकरणं सम्यक्त्वप्राप्तिं चाधिकृत्य सर्वकालं स्वरूपयोग्यताया अधिकरणं भवति। फलोपहितयोग्यतायास्तु अधिकरणं कदाचिदेव भवति, तथाभव्यत्वयोगेन कालादिसामग्र्याः कादाचित्कत्वात्। एवं क्षायोपशमिकसम्यक्त्वं तदपगमश्च कस्यचित्तथाभव्यत्वयोगेन एकद्व्यादिक्रमेण यावदसंख्येयवारानपि सम्यक्त्वप्राप्तिर्भवति। 'असंखवारा खओवसमे'त्तिवचनात्। सम्यक्त्वापगमे च मिथ्यात्वं पञ्चानामन्यतरदेव स्यात्। तत्र कारणं तावन्मुख्यवृत्त्या तथाभव्यत्वमेव। तच्च कालादीनां पञ्चानां मध्ये जीवस्वभावविशेष एव मन्तव्यः। परं मिथ्यात्वेऽपि आगाढमिथ्यात्वं असद्ग्रहवत्तामेव भवति। निश्चयतोऽसद्ग्रहे च सति मार्गानुयायि कृत्यमपि न भवति, सद्गानवस्थानात्। यदागमः—'मग्गाणुसारिअ'त्ति। असद्ग्रहपरित्यागेनैव तत्त्वप्रतिपत्तिर्मार्गानुसारितेति वृत्तौ। अत एवासद्ग्रहः सम्यक्त्वप्राप्तिप्रतिबन्धको मन्तव्यः। स चाभिग्रहिकाभिनिवेशिकयोस्तीव्रत्वेन समानोऽप्याभिनिवेशिकस्य तीव्रतरः, सर्वांशे शुद्धत्वात्। तच्च जैनेऽप्यजैनत्वेन श्रद्धानादिति गाथार्थः ॥ ८८ ॥

अथाऽन्यथाना साव्यवहारिकत्वाभावहेतुसूचिका गाथामाह—

**जं चिअ अज्जप्पभिई, सज्जाय तं अणंतवुत्तो वि।**
**तह त भविस्सइ पुण, ण होइ सिं जेण ते थोवा ॥८६॥**

व्याख्या—यद्वस्तुजातं, अद्यप्रभृति सञ्जातं, चिअ एवार्थे व्यवहितसम्बन्धी, तदेव अनन्तकृत्वोऽनन्तशः, अपिरेवार्थे,

अनन्ता एव सञ्जाता। तथैव-तेनैवप्रकारेण पुनरानन्ता एव भविष्यति। यदागम —०००००००

एतच्च 'मि'ति। तेषामभव्यानां न सम्भवति, येन कारणेन ते अभव्या, स्तोका परिमिता, सम्यक्त्वप्रतिपतितानामनन्तसमभागवर्तित्वात्। तेषां चानाद्यपर्यवसित व्यवहारित्वभवनं न सम्भवति। अत एव ते अभव्या न व्यवहारिणो, नाप्यव्यवहारिणो। किन्तु व्यवहारित्वादिव्यपदेशबाह्या इति तात्पर्यमिति गाथार्थः ॥ ८९ ॥

अथाऽभव्यानां मिथ्यात्वं किं कीदृग् भवति? इति दर्शयति–

मिच्छत्त पुण तम्मि, अणभाग मदमवि अ अणवरय।
तिथ्य वि समयाई, ण हाइ ज साइमत च ॥९०॥

व्याख्या–मिथ्यात्वं पुनस्तेषामभव्यानामुपलक्षणाद् भव्यानामव्यवहारिणां च मन्दमप्यनवरतं सर्वकालीनं निरन्तरमनाभोगमेव मिथ्यात्वं भवति। तस्यैव अनाद्यपर्यवसितत्वात्। सास्वादनादिकं च तीव्रमपि तेषां न भवति। तत्र हेतुमाह यद् यस्मात्, व्यक्तमिथ्यात्वं सादि आदिमत्, सान्तं च–सपर्यवसितं च, तच्चाभव्यानां न सम्भवति, किन्तु भव्यानामेवेति तात्पर्यम्। एतेनोक्तमिथ्यात्वमनाभोगरूपमनन्तपुद्गलपरावर्तसंसारस्थितिहेतुत्वादिति सुव्यक्तरूपतयापि परास्ता। अनाभोगमिथ्यात्वस्य संसारस्थितिहेतुत्वाभावात्। नह्यव्यवहारिणो जाता अनाभोगमिथ्यात्वेन संसारस्थितिभाजो भवन्ति, सर्वथ्यनाभोग व्यवहारित्वभवनात्। अत एवानाभोगमिथ्यात्वस्य

सम्यक्त्वप्राप्तेरप्रतिबन्धकत्वेन भणिति । यदाह श्रीहरिभद्रसूरि'–यथाऽस्य भगवतो नाममात्रमप्यजानाना प्रकृत्यैव भद्रका ये भवन्ति, ततश्च मार्गानुसारिणं सद्‌वृत्यायेन अनाभोगतोऽप्यस्य वचनानुसारेण प्रवर्तन्ते । तानप्येवंविधाननल्पविक्रमान् लोकान् एष कर्मपरिणामो महानरेन्द्रो यद्यपि संसारनाटके कियन्तमपि कालं नाटयति तथापि सदागमस्याभिप्रेता इति मत्वा अधमपात्रभावं नारकतिर्यक्कुमानुषकदमररूपं तेषां न विधत्ते इति उपमितिभवप्रपञ्चायां । अनाभोगमिथ्यात्वं चाव्यक्तमिथ्यात्वं गुणस्थानकवृत्त्यानुकूलमवसातव्यम् । अत एवानाभोगे मिथ्यात्वे वर्तमाना जीवा न मार्गगामिनो, न वोन्मार्गगामिनो भण्यन्ते । अनाभोगमिथ्यात्वस्यानादिमत्त्वेन सर्वेषामपि जीवानां निजगृहस्थानीयत्वात् । लोकेऽपि निजगृहे भूयः कालं वसन्नपि न मार्गगामी, नवा मार्गगामीति व्यपदिश्यते, किन्तु निजगृहात् निर्गतं समीहितनगराभिमुखं गच्छन् मार्गगामी, अन्यथा तू मार्गगामीति व्यपदिश्यते । एवं च तथाभव्यत्वयोगेनानादिमिथ्यात्वान्निर्गतो यदि जैनमार्गमाश्रयते तदा मार्गगामी, जैनमार्गस्यैव मोक्षमार्गत्वात् । यदि च शाक्यादिदर्शनं जमाल्यादिदर्शनं वाश्रयते, तदोन्मार्गगामीति व्यपदिश्यते । तद्दीयदर्शनस्य संसारमार्गत्वेन मोक्षं प्रत्युन्मार्गभूतत्वात् । यदागमः –

'कुप्पवयणपासंडी, सव्वे उम्मग्गपट्ठिआ ।
सम्मग्गं तु जिणक्खायं, एस मग्गो हि उत्तमे' ॥ १ ॥ त्ति।

उत्त० २३ । अत्र हि कापिलेयादिकुदर्शनवर्तिनः एवोन्मार्ग

तया भणिना, तेषामेवो मार्गापदेशकत्वेन लोकानामुन्मार्गभूतत्वात्। अत एव भणित—

'सेसा मिच्छद्दिट्ठी, गिहिलिंग कुलिंग दव्वलिंगेहिं।

जह तिण्णि उ मुक्खपहा, ससारपहा तहा तिण्णि ॥१॥ त्ति

उपदेशमालाया। अत्र गृहिलिङ्गिनो ब्राह्मणा मन्तव्या, तेषामेवो मार्गमापकत्वेन तथात्वादिति गाथार्थ ॥ ९० ॥

अथ प्रसङ्गतो व्यक्तमिथ्यात्वेष्वपि किं मिथ्यात्व कुतो मिथ्यात्वान्मन्द तीव्र वा भवतीति विवेकेन परिज्ञानाय गाथामाह—

**समइअमणभिगहिअ, अभिगहिअ अभिणिवेसिअ कमसो।**
**अणुण्णनिरूवाए मन्दाइअ जाण तिव्वतम ॥ ९१ ॥**

व्याख्या—साशयिक १मनाभिग्रहिक २माभिग्रहिक ३माभिनिवेशिक४ चेति क्रमश—क्रमेणान्योन्यविवक्षया मन्द १ तीव्र २ तीव्रतर ३ तीव्रतम ४ च भवेदित्यक्षरार्थ।

भावार्थ पुनरेव सांशयिकान्तीना देव गुरु धर्मविषयकव्यक्तचेतनामूलकत्वेन साम्येऽपि अनाभिग्रहिकाद्यपेक्षया मन्द साशयिक, साशयिकापेक्षया चानाभिग्रहिक तीव्र, ततोऽप्याभिग्रहिक तीव्रतर, ततोऽप्याभिनिवेशिक तीव्रतम, सर्वास्पष्टमिथ्यात्वरूपत्वात्। मिथ्यात्व च अदेवादिषु देवत्वादिना सतावत्त्वात्। तच्चैव साशयिक हि जैनप्रवचन सम्यग् नवेति सशयात्मक मन्द मिथ्यात्वम्। ततश्च सर्वाण्यपि दर्शनानि शोभनानीत्यादिरूपमनाभिग्रहिक तीव्र, तस्याभिग्रहिकस्वरूपत्वात्। यदुक्त—

'सुनिश्चित मत्सरिणो जनस्य न नाथ ! मुद्रामतिशेरते ते । माध्यस्थ्यमास्थाय परीक्षका ये, मणौ च काचे च समानुबन्धा' ॥ १ ॥ इति द्वात्रिंशिकायां । ततश्चाभिग्रहिक तीव्रतर, अय जैनो मार्गो न सम्यग्, वेदबाह्यत्वात् शूद्रपापण्डिकधर्मत्वाच्चेति जैनरूपेण मार्गविषयकद्वेषमूलकत्वात् । ततोऽप्याभिनिवेशिक तीव्रतम, तद्व्यञ्जक तु जिनवचनानामननुवादित्वमेव । तच्च प्राक् प्रदर्शितमिति गाथार्थ ॥ ९१ ॥

अथाभिनिवेशिमिथ्यादृष्टिष्वपि नागपुरीयलौम्पकोऽल्प श्रुतत्वता दुरधिगम्य इति मत्वा तदीयस्वरूप किञ्चिद्विशेषतो व्यक्तीक्रियते—

**तत्थ वि अ अभिणिवेसी, णागपुरिअलुंपगो हि दुरहिगमो । अप्पसुआण सिं जे, वयणविरोह ण याणंति ॥ ६२ ॥**

व्याख्या—तत्रापि व्यक्तमिथ्यात्वेष्वपि, धर्मधर्मिणो कथचिदभेदात् नागपुरीयलौम्पक अभिनिवेशी तेषामल्पश्रुताना दुरधिगम –दु खेनाधिगमो ज्ञान यस्य स तथा । तेषा केषा ? ये वचनविरोध अह मौनी यावज्जीवमित्यादिव्याघात न जानन्ति, तेषा दुरधिगम्य इत्यर्थ । हिरेवार्थे। दुरधिगम्य एवेति गाथार्थ ॥९२॥

अथ तेषा मूलप्ररूपणापि निजवचनविरोधिनीति दर्शयन्नाह—

**सव्वण्णू वि जिणिंदो, णिअय णिण्णइ ण उण इअरपि । एव तम्मयमूल-परूवणा पावकम्मुदया ॥ ६३ ॥**

व्याख्या–सर्वज्ञोऽपि जिनेन्द्रोऽर्हन् नियत अवश्यभावि

वस्तु, निर्णयति इदमित्थमेव भावीति निर्णय भणति, न पुनरित-रदप्यनियतमपि अवश्यभाव्यपि । एवमुक्तप्रकारेण लभते-नाग पुरीयलौम्पकमते, मूलप्ररूपणा अनियतरूपणेनाऽऽदिमरूपणा, कुतः ?, पापकर्मोदयात् तीव्रमिथ्यात्वमोहनीयकर्मोदयात । तत्कथं ? इति चेत्, उच्यते यदि सर्वज्ञ कथमनियत न निर्णयति ? यदि च न निर्णयति कथं सर्वज्ञ ? इति वचनविरोध, अरे मौनीयात्मिन जानातीति गाथार्थ ॥ ९३ ॥

अथोक्तप्रकारेण ध्रुवाणाऽपि विना यथा सर्वज्ञो भवति न भवति च, तथा दर्शयन्नाह—

जइ णिअयमणिअय वा, एगमहावेण सव्वया हुज्जा ।
ता अरिहा सव्वण्णू, अण्णह णिअमा ण सव्वन्नू ॥ ९४ ॥

व्याख्या—यदि नियतमनियत वा वस्तु एकस्वभावेन सर्वदा सर्वकाल भवेत्,'ता'-तर्हि, अर्हन् सर्वज्ञो भवेत् याथार्थ्येन परिज्ञानात्। अन्यथा यदि च कदाचिदप्यनियत सन्नियत भवेत्, तर्हि तदपरिज्ञानात् सर्वज्ञो न भवेत् नियमात् निश्चयेन, भूतानां भाविना (भवतां) भूयमानाना च पदार्थानामेकतरस्याप्यज्ञाने सर्वज्ञत्वहानिस्तथापि सम्मतेति गाथार्थ ॥ ९४ ॥

अथायुरधिकृत्य तदीयकल्पनामाह—

णिरुवक्कमसोवक्कम भेएहिं दुविहमाउअ होइ ।
पढम णिअयमणिअयं, नियति विगप्पिअ तेण ॥ ९५ ॥

व्याख्या—निरुपक्रमसोपक्रमलक्षणौ यौ भेदौ, अथ्यक्षिपेण मृतौ, ताभ्यामायुर्द्विविध भवति [illegible] ते।

तत्र प्रथम निरुपक्रमायुर्नियत, सोपक्रमायुश्च द्वितीयमनियतमायुरिति तेन प्रश्नलौम्पकेन विकल्पितामिति गाथार्थ ॥ ९५ ॥

अथ प्रश्नलौम्पकमुखेनैव केवलिन सर्वत्रापि निर्णय एव भवतीति व्यवस्थापनार्थं लौम्पकमेव प्रश्नविषयायुर्वनाह—

णणु मोवक्कमआउ स्सुवक्कमा जिणवरेण विण्णाया ।
जइ ता तपि अ णिण्णेइ, अण्णहा णेव सव्वन्नू ॥ ९६ ॥

व्याख्या—ननु भो लौम्पक ! सोपक्रमायुषा ये उपक्रमा प्रत्यायुर्भिना भिना एव भवति । ते च यदि जिनवरेण तार्थ कृता, विज्ञाता विशेषेण प्रत्यायुर्भिन्नस्वरूपण ज्ञाता अवगता, 'ता'तर्हि, तदपि सोपक्रमायुरपि निर्णयति, अन्यथा—विज्ञाताऽसम्भवात्, सर्वज्ञो नैव भवेत् न भवदेवेयर्थ । अन्नि न सर्वन् स्वयापि तथैवाभ्युपगमात् । किंच उपक्रमाणामज्ञाने इष्ट सोपक्रमायुरिति विशिष्टज्ञानमेव न स्यात् । विशिष्टज्ञानस्य विशेषणज्ञानपरज्ञादिति गाथार्थ ॥ ६६ ॥

अथोद्दिष्टस्य लौम्पकस्य भ्रान्तिकारणमाह—

जइ-ता सद्दभवतो, ससयवयण वइज्ज मूढमणा ।
अमुणतो ताणत्थ, कप्पिअअत्थेण भतिकरो ॥ ९७ ॥

व्याख्या—यदि तर्हिशब्दाभ्यां भ्रातो व्यामूढ मिथ्यात्वोपहतावबोध इति यावत् । सशयवचन वदेत् मूढमना मूर्ख यदि तर्हिशब्दयोर्वक्तु सशय भापने 'ताणत्थ'ति तयोर्यदि तर्हि शब्दयोरर्थमभिधेयमजानान कल्पितार्थन निजमतिविकल्पितार्थ करणेन, भ्रान्तिकरो भ्रमोत्पादक मुग्धश्रोतृगामिति गम्य ।

अथ भाव –यदि सोपक्रमायुष्कस्य पुरुषस्योपक्रमो मिलिष्यति, तर्हि मृत्युमाप्स्यति, नान्यथेति । यथा यद्यय धर्मं करिष्यति, तर्हि सुखी भविष्यतीति, वक्तु सन्यमन्तरेण तथा प्रयोगाऽसम्भवादिति तस्याभिप्राय इति गाथार्थ ॥ ९७ ॥

यथोक्तप्रकारेण कल्पना भ्रान्त्यैवेति भ्रान्तिसमर्थनाय यदि-तर्हिशब्दयोरभिधेयमाह—

**जम्हा जइ तासद्दा, णिआमगा कज्जकारणाणमिह ।**
**अण्णय वइरेगेहिं, लोअपसिद्ध त्ति निण्णेअ ॥ ९८ ॥**

व्याख्या–तस्मादेव भ्रान्ति, यस्मात् कारणात् इह जगति यदि–तर्हिशब्दौ कार्यकारणाना कार्यकारणभावसम्बन्धाना, नियामकौ निश्चायकौ भवत, काभ्या ? अन्वयव्यतिरेकाभ्या 'सति सद्भावोऽन्वयोऽसत्यसद्भावश्च व्यतिरेक' इत्येवरूपाभ्या, यथा यदि मृत्पिण्डदण्डकुलालादीनि सामग्री स्यात्तर्हि घटोत्पत्ति स्यात्, तदभावे च न स्यादेवेत्येव प्रकृतेऽपि बोध्यम् । अन्यथा यदि सावद्याचार्ये उत्सूत्र नाऽवश्यत्तर्हि अनन्तकाल ससारे नाऽभ्रमिष्यदित्यादिप्रयोगानुपपत्तिप्रसक्ते । तत्र सन्देहाऽभावात् । एव चानेकधा प्रयोगा भवन्तीति लोकप्रसिद्ध निज्ञेयमिति गाथार्थ ॥ ९८ ॥

अथोद्दिष्टजैम्यक दूषयितु प्रथम जैनप्रक्रियामाह–

**कालाइपचजणिअ, सव्व कज्ज हविज्ज जिणसमए ,**
**तत्थ य एगा णिअई, सेसचउक्क अणिअइत्ति ॥ ९९ ॥**

व्याख्या–कालादिपचजनित, आदिशब्दात् स्वभावादयो

माद्या । तथा च काल १ स्वभाव २ नियति ३ पूर्वकृत ४ पुरुषकार ५ रूशणा पच, तैर्जनित सर्व कार्य जिनमये जिन-शासने भवेत् । यदुक्त—

'कालो१ सहावो२ णिअई३, पुव्वकय४ पुरिसकार५ णेगता ।
समवाए सम्मत्त, एगते होइ मिच्छत्त ॥१॥ सम्मतिसूत्र ।

तत्र एका नियति, शेषचतुष्क तु अनियतिरिति गाथार्थ ।९९।

अथ परमत दूषयन्नाह—

तेहिं जणिअ कज्ज, णिअयाणिअय जिणेण पण्णत्त ।
त चिअ णिअया भिण्ण, अणिअयमेव महामोहो ॥१००॥

व्याख्या—ताभ्या नियत्यनियतिभ्या जनित कार्य कार्यमात्र, नियतानियत जिनेन प्रज्ञप्त 'त चिअ'त्ति । तदेव नियताद् भिन्न मनियत भवतीति । एव महामोहो मिथ्यात्वमोहो मन्तव्य इति गाथार्थ ॥ १०० ॥

अथ पुनरपि परविकल्पमाह—

ज णिअय तमणिअय, ण हाइ एग विरुद्धधम्मेहिं ।
ज सीअ त उसिण, किं केण सुअ व दिट्ठ वा ? ॥१०१॥

व्याख्या—यं नियत तदनियत न भवति । किमेक विरुद्ध धर्माभ्या-नियतत्वानियत त्वाभ्या विरोधात् । तत्र दृष्टान्तमाह यत् शीत शीतस्पर्शाधिकरण, तदुष्ण उष्णस्पर्शाधिकरण, किं केनापि दृष्ट श्रुत वा ? नेतीति गाथार्थ ॥ १०१ ॥

अथ शीतोष्णस्पर्शयोरिव नियतत्वानियतत्वयो सामाना धिकरण्य न भवतीत्येव कल्पनाया मूलकारणमाह—

काल-णय कारणाण, भिण्णाभिण्णस्सरूवमगुणतो ।
अविरोहे पि वज्जना, विरोहमण्णाणमाहप्पा ॥ १०७ ॥

व्याख्या—कालश्च नयाश्च कारणानि चेतीतरेतरद्वन्द्व । तेषां भिन्नाभिन्नस्वरूपमजानान–कालादीना भेदेनाभेदेन च वस्तुना स्वरूप भिन्न भवति नेति परिज्ञानशून्य इत्यर्थ । अविरोधमपि विरोध वदेत । कुतोऽज्ञानमाहात्म्यात मिथ्यात्व-मोहनीयोदयसद्रृक्त यदज्ञान तद्विपरीतावबोधेन कुत्सितज्ञान मज्ञान, नञ कुत्सार्थत्वात्, तत । अत एव क्रोधादिसर्वपापाद-ज्ञान महापाप । यदुक्त–

'अज्ञान खलु भो कष्ट, क्रोधादिभ्योऽपि सर्वपापभ्य ।
यस्माद्धितमहित वा, न वेत्ति येनाऽऽवृतो लोक ॥ १ ॥

इति । अय भाव–कालनयकारणाना भिन्नत्वेन सामानाधिकरण्येऽपि न विरोध, तथाहि कालभेदेन शीतोष्णस्पर्शयोरपि सामान्याधिकरण्य भवत्येव । य एव तामसा परमाणव, त एव तेजस्तया परिणमन्ते । य एव तैजसा परमाणवस्त एव तमस्तया परिणमन्ते इति वचनात् । तत्र तामसा परमाणव शीतला, तैजसाश्चोष्णा इति सर्वसम्मत । एककालीनयोस्तु शीतोष्णस्पर्शयो सामानाधिकरण्य न भवत्येव, कालभेदजन्य परिणामान्तरम्तरेण विरोधात । तथा नयभेदेन विरोधाभावो, यथा यदेव वस्तु द्रव्यार्थिकनयापेक्षया नित्य, तदेव पर्यायार्थिक नयापेक्षया अनित्य, सर्वेषामपि पदार्थानां द्रव्यत्वेन तादवस्थ्ये-ऽपि पर्यायाणा प्रतिसमय भिन्नत्वात् । अत एव जैनाना दीपा-

त्व्योमपर्यन्ता पदार्थास्तुल्या एव भवन्ति। यदाह श्रीहेमचन्द्रसूरि –

'आदीपमाव्योम समस्वभावं, स्याद्वादमुद्रानतिभेदि वस्तु।
तन्नित्यमेवैकमनित्यमन्यदिति त्वदाज्ञा द्विषतां प्रलापाः ॥१॥

इति द्वात्रिंशिकायां। विरोधस्तु द्रव्यार्थिकनयाभिप्रायेण पर्यायार्थिकनयाभिप्रायेण वा नित्यमनित्यं च वदतोऽसत्त्य। एवं भिन्नकारणजन्यत्वापेक्षया विरोधोऽपि न भवत्येव। यतो जैनानां मते सर्वमपि कार्यं कालादिपञ्चसमवाय जन्यं भवति। तत्रैका नियतिस्तज्जन्यत्वाऽपेक्षया सर्वमपि कार्यं नियतं, नियतिव्यतिरिक्तकालादिचतुष्टयजन्यत्वाऽपेक्षया अनियतं, नियत्यनियत्यो कारणभूतयोर्भिन्नत्वेन तदुभयजन्यत्वाऽपेक्षया सर्वं कार्यं नियतानियतं भवति। तेन नियतत्वानियतत्वयो सामान्याधिकरण्ये वक्तव्ये विरोधगन्धोऽपि न भवति। भवति च विरोधो नियत्याऽनियत्या वा जन्यं सर्वं कार्यं नियतानियतमिति वदत। तत्र दृष्टान्तस्तु पितृत्वपुत्रत्वविशिष्ट पुरुष। स च निजपितृजन्यत्वाऽपेक्षया पुत्र, निजपुत्रजनकत्वाऽपेक्षया च पितेति न विरोध। भवति च विरोध निज पितरं पुत्रं वा अधिकृत्य पितृत्वपुत्रत्वयो सामान्याधिकरण्य वदत। अथवा मातापितृजन्य पुत्रोऽपि दृष्टान्तो बोध्य। परं काला दिपञ्चसमवायजन्यत्वेन साम्येऽपि मुख्यवृत्तिमधिकृत्य पञ्चानामपि अनियमेन विवेकव्यपदेशो भवति, यथा–कर्मणामुदीरणा पुरुष कारणेन भवतीति व्यपदेश। यदागम –'जं तं भंते! अप्पणा

चेव न्दीरेति, अप्पणा चेव सवरेति' त्ति। भग०श० १ उ० ३। दृत्त्येकदेशो यथा 'इह मदप्युदीरणादौ कालस्वभावादीनां कारणत्वमस्ति, तथापि प्राधान्येन पुरुषवीर्यस्यैव कारणत्वमुपदर्शनाद 'ज तमित्यादि वस्त्रमिति विशेषो बोध्य इति गाथार्थ ॥ १०२ ॥

अथोक्तनाथामिधायिकामागमसम्मतिमाह—

बीअंगे पुण एव, सुत्ते वित्तीइ जुत्तिपुव्वपि।
ज भणिय तपि इह, पमगओ दसिअ णेअ ॥ १०३ ॥

व्याख्या–द्वितीयाङ्गे सूत्रकृदङ्गनाम्न्यङ्ग, पुन शब्द पूर्वसङ्गतिद्योतनार्थ । एव–प्राक्प्रदर्शितमेव सर्वं वस्तु पचसमवायजन्यत्वेन नियतानियत, न पुन किंचिन्नियत किंचिच्चानियतमिति विशेषेण भणि तद्वदित्यर्थ । क्व ?, सूत्रे वृत्तौ च युक्तिपूर्वमपि–युक्तियुक्तमित्यर्थ । यद् भणित तदपीह प्रकरणे प्रसङ्गत –प्रागुक्तस्य लौम्पकविशेषस्य परिज्ञानार्थमित्यर्थ । सूत्रोक्तमेवानुकमित्यर्थ इति ज्ञेय–ज्ञातव्य। अथ सूत्रोक्तस्य दिग्दर्शन त्वेव–'एवमेआणि जपता बाला पडिअमाणिणो। णिअयाणिअय सत, अयाणता अबुद्धिआ ॥ १ ॥ इति श्री सूत्रकृदङ्गे ऽध्य० १, उ० २। वृत्त्येकदेशो यथा 'एवमित्यनन्तरोक्तस्योपदर्शने। 'एतानि' पूर्वोक्तानि नियतवादाश्रितानि वचनानि जल्पतोऽमिदधतो बाला इव बाला सदसद्विवेकविकला अपि सन्त पण्डितमानिन –आत्मान पण्डित मन्तु शील येषा ते तथा, किमिति ते एवमुच्यन्ते ? इति तदाह–यतो 'णि

अयाणिअय सत' ति। सुखादिक किंचिन्नियतिकृत–अपद्यभा व्युदयप्राप्ति तथा अनियत–आरमपुरुषेश्वरादिप्राप्ति सत् नियतिकृतमेवैकान्तेनाश्रयन्ति, अतोऽजानाना सम्यग् सुख-दु म्वादिकारण, अबुद्धिका –बुद्धिरहिता भवन्तीति। तथाहि– आर्हतानामित्यादि यावत् तदेव नियत्यनियत्यो' कर्तृत्वेन युक्त्युपपन्ने सति नियतेरेव कर्तृत्वमभ्युपगच्छन्तो निर्बुद्धिका भवन्तीत्यवसेयम्। अत एव 'एगमेगे उ पासत्था' इत्यादि पुरोवर्तिसूत्रस्य व्याख्याने 'सर्वस्मिन्नपि वस्तुनि नियतानियते सतो'ति भणितमिति सूक्ष्मदृशा सूत्रकृदङ्गस्य वृत्तिरेव सम्यग् पर्यालोच्येति गाथार्थ ॥ १०३ ॥

अथ प्रकृतप्रकरणस्य निगमनमाह–

एव खलु सुत्तत्थ, सम्म सुणिउण सम्मदिट्ठीहिं।
णेअ तित्थगरेहिं, भणिअमिण ति सुबुद्धीए ॥ १०४ ॥

इति सूत्रव्याख्यानविधिशतकसूत्र समाप्तम्।

व्याख्या–एव –प्रागुक्तप्रकारेण, सूत्रार्थ–सूत्रव्याख्यान, सम्यक् श्रुत्वा सम्यग्दृष्टिभिर्ज्ञेय, कया ?, इह सूत्रार्थकरणं तीर्थकृद्भिर्भणितमिति बुद्ध्या ज्ञेय 'सुत्तत्थो खलु पढमो' इत्या दिरूपण सूत्रव्याख्यान तीर्थकृद्भिर्भणितमिति श्रद्धेयमिति तात्पर्यमिति गाथार्थ ॥ १०४ ॥

। इति सूत्रव्याख्यानविधिशतकस्य वृत्ति समाप्तेति भद्रमिति ।